# सनाद्यन्त-धात्वर्थविमर्शः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

विद्यावारिधिः ( पी-एच्०डी० ) इत्युपाधये प्रस्तुतः

शोध-प्रबन्धः




निर्देशकः

डॉ० कालिका प्रसाद शुक्लः

भूतपूर्व वेदवेदाङ्गसंकायाध्यक्षः

अनुसन्धाता

लक्ष्मण चैतन्य ब्रह्म

नव्यव्याकरणाचा

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराण

श्री रामनवमी सं

# सनाद्यन्त-धात्वर्थविमर्शः

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

### विद्यावारिधिः ( पी-एच्०डी० ) इत्युपाधये प्रस्तुतः

### शोध-प्रबन्धः




निर्देशकः

डॉ० कालिका प्रसाद शुक्लः

भूतपूर्व वेदवेदाङ्गसंकायाध्यक्षः

अनुसन्धाता

लक्ष्मण चैतन्य ब्र

नव्यव्याकरणाच

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वारा

सन् १९७३ श्री रामनवम

प्रकाशक :

कृष्ण लाल यादव
लोको कालोनी, खगौल
पटना, (बिहार)

**

द्रक :

नीश चन्द्र श्रीवास्तव (बाल भाई)
ामोहन प्रिन्टर्स
, हिन्दी साहित्य सम्मेलन, मार्ग
ाहाबाद (उ० प्र०)

# सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

श्रीलक्ष्मणचैतन्यब्रह्मचारिणा "सनाद्यन्त-धात्वर्थविमर्शः" इति विषयकः शोधप्रबन्धः प्रस्तुतः। स च मयाऽऽमूलचूडं पर्यवेक्षितः। निबन्धोऽयं सर्वथा परीक्षणार्हं इति भृशमहं संस्तौमि।

ह० कालिका प्रसाद शुक्लः

२० मार्च, १९८५ (कालिकाप्रसादशुक्लः)

# कृतज्ञताप्रकाशः

शोधप्रबन्धस्यास्य प्रस्तुतिप्रसङ्गे परमपूज्यानां प्रातःस्मरणीयानां परब्रह्मस्वरूपाणां धर्मसम्राजां गुरुवराणां स्वामिश्रीहरिहरानन्दसरस्वतीकरपात्रमहाराजानां पादपद्मं शिरसा नौमि। तेषामेव गुरुचरणानामसीमकृपया काश्यां निवसता मया प्रारम्भिकविद्याध्ययनं सम्पाद्याद्य शोधप्रबन्धममुं प्रस्तोतुं सौभाग्यमलम्भि। तेषां गुरुपादानां पुण्यपुञ्ज एव मम समेषु कार्येषु बलमादधाति। अहमस्मिन् प्रसङ्गे परमाराध्येषु गुरुचरणेषु भूयो भूयः स्वप्रणामाञ्जलिं निवेदयामि।

प्रसङ्गेऽस्मिन् सर्वप्रथमं शोधप्रबन्धस्यास्य निर्देशकस्य वाराणसेयसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य अवकाशप्राप्तस्य व्याकरणविभागाध्यक्षस्य वेदवेदाङ्गसंकायाध्यक्षस्य च आचार्यकालिकाप्रसादशुक्लस्य हृदयेन कृतज्ञतां प्रकाशयामि, यस्य निर्देशनकौशलेनामुं शोधप्रबन्धं प्रस्तोतुमहमलमभूवम्। शोधप्रबन्धनिर्माणावधौ आचार्यशुक्लस्य प्रौढं पाण्डित्यम्, मानवता, उदारता, सदाशयता च मां कामं प्रा... भवत्। अहं भगवन्तं काशीविश्वनाथं भूयो भूयः प्रार्थये यत् श्री शुक्लः स्वस्थः सन् दीर्घं कालं जीवन् छा... ननेकान् विद्याप्रदानेनोपकुर्यात्।

अहमत्रावसरे परमं सुहृदं श्रीसीतारामचार्यं भूयसा हार्दिकेन साधुवादेन संयुनज्मि, यस्य ... प्रेरणया दिश्यमूष्यां जागरूको भूत्वा असम्भवमपि कार्यमिदं सम्पादयितुं क्षमोऽभूवम्।

मदीयः सचिवः श्री श्रीप्रकाशमिश्रोऽपि मम साधुवादं कथं नासादयेत्, यो हि कार्यमिदं र... भावेन सफलयितुं यां निष्ठां तत्परताञ्च प्रदर्शितवान्, तन्निखिलमपि नितान्तं स्तुत्यमस्ति। अहं श्री...र्यन्ते, समुज्ज्वलं श्वोवसीयसं कामयमानो भगवन्तं भवानीजानिं प्रार्थये।

अवसरेऽस्मिन् श्री राकेशहोदरपाण्डेयमपि अनेकैः साधुवादैः सभाजयामि, यस्य निर... ...दितव्यो कार्यमिदं साफल्यं प्रापत्।

श्रीभगावन यादवोऽपि ममाशीर्वादं लभताम्, यो हि सततं परिश्रम्य कार्यमिदं सम्पादितव...ते"।

अन्येऽपि सज्जना मदीयं धन्यवादं प्राप्नुयुः, ये कार्येऽस्मिन् मनसा वचसा कार्येण च... प्रदत्तवन्तः।

ह० लक्ष्मण चैतन्य ब्रह्मचा...

(लक्ष्मण चैतन्य ब्रह्म...)

श्री रामनवमी सं० २०४२

# विषय-सूची

पृष्ठ संख्या

पृष्ठ संख्या



द्रक :
नीश च...
...मोहन
..., हिन्दी
...ाहाबाद

# उपोद्घातः

## शब्दानुशासनमहत्त्वम्

गीर्वाणगवीं पुरस्कृत्य यावान् विशिष्टो दोषमुक्तो व्यवस्थाकलितो विद्वद्विभूषितो दृढः प्रौढो विद्वन्मानसमरालाभिनन्दितो वैज्ञानिकसरणिसमन्वितश्च विमर्शो भारतभूवलयं यथा भूषयति न तथा देशान्तराणि। सुरभारत्याः श्रेणिविभाजनम्, असाधरणं प्रकृतिप्रत्ययकल्पनम्, धातुप्रत्ययवाच्यनिश्चयनम्, व्यपेक्षैकार्थीभावपक्षव्यवस्थापनम्, उत्सर्गापवादचिन्तनम्, पदार्थानामन्योन्यं संसर्गस्थापनम्, प्रकृत्यर्थ-प्रत्ययार्थसम्बन्धसमीक्षणम्, शाब्दबोधसामग्रीसमवधानपरिकल्पनम्, पदानां वाक्यानाञ्च मूलभूत-शब्दस्फोटगवेषणम्, किं बहुना निखिलस्यापि चराचरात्मकस्य जगतो मूलभूतस्य शब्दस्फोटस्य महता प्रयत्नेनान्वेषणम्, भारतीयसंस्कृतशाब्दिकशार्दूलानां बुद्धिवैभवस्य परां काष्ठां निर्दिशति।

कियत्संख्याका नामार्थाः, के च ते, तेषु च कतमस्य श्लाघ्यत्वम्, तत्तदर्थः कः, निपातानां वाचकत्वं द्योतकत्वं वा, क्व च लकाराणां शक्तिः, समासे विशिष्टा शक्तिः, आहोस्वित् पदशक्त्यैव निर्वाहः, शक्ति-बोधजनकताख्या, वाच्यवाचकभावापरपर्यायिरूपा, धातोः फलावच्छिन्नव्यापारे, व्यापारावच्छिन्नफले, फ व्यापारे च पृथक् शक्तिः, कर्त्राख्यातस्थले व्यापारमुख्यविशेष्यकः शाब्दबोधः, कर्माख्यातस्थले च फ मुख्यविशेष्यकः शाब्दबोधः, कृत्प्रत्ययस्थले आश्रयविशेष्यकः शाब्दबोधः विभक्तीनां केऽर्थाः, काश्चका विभक्तयः, काश्च तद्भिन्नाः, किम्बहुना, अखिलस्यापि ब्रह्माण्डस्य कारणीभूतस्य स्फोटस्य कियन्तो र्यन्ते, प्रभेदा इत्यादिशब्दविषयकविचारचातुरी तर्कविकर्कशा परिणामरमणीया स्वयंवरवधूर्भारतीयानेव सं शब्दानुशासनविदो वृतवती, नान्यान् देशान्तरीयानिति नाविदितं विदितवेदितव्यानां तत्रभवतां समेधितस्वान्तानां सुमनसाम्।

वेदितव्यो

ते"।

## भारते संस्कृतशब्दानुशासनव्यापकता

अस्यैव भारतभूभागस्य सौभाग्यमेतद् यच्छताब्दीयविद् विविधानि कष्टान्यनादृत्य नै तपांसि समादृत्य विधूतविविधकल्मषा अत एवामलमानसा अप्रतिमप्रतिभा मुनयो मुनिकल्पाश्च ... गत्वेन

र्यैः

तत्त्वसाक्षात्कारा: शब्दविद्याया अवगमाय प्रसाराय च विज्ञानसरणिसमन्वितानि तानि-तानि शब्दशास्त्राणि निरमासिषु:, येन भारतस्य गौरवमद्याप्यमरायते, तिरोभवन्ति चान्यभाषाशास्त्रविदां महामेधाविनामपि विदुषां यशस्ततय: ।

अमीषां शब्दशास्त्रकाराणां प्रबलेन प्रयत्नेनानितरसाधारणप्रतिभयादम्येनोत्साहेन भाषाशास्त्रीय-नवनवाविष्कारेण च संस्कृतभाषा परमाममरतां भजते, आत्मनो लोकभाषात्वं सर्वभाषापरिषत्सु प्राप्ताग्रासनत्वञ्च विख्यापयति । अव्यवस्थितस्य शब्दानुशासनशास्त्रस्य दारिद्र्यादनेका भाषा विलयमिता दुरवगमार्थतां वा प्राप्तुं विवशा अभूवन् । नेमां दशां सुरसरस्वती समन्वभूत् । प्रत्युत, संस्कृतभाषाशाब्दिकानां सुरसरस्वती-समाराधनसमर्पितचेतसां सचेतसां प्रात:स्मरणीयानां विद्वन्मूर्द्धन्यानामसीमयानुकम्पया परभाषासंस्कार-दिग्धमानसानां विदुषां प्रहारशतानि सोढ्वापि जीवन्ती सती सुतरां सुगमतां प्राप्नोति । किम्बहुना, भारतीय-संस्कृतशब्दशास्त्रमन्तरा आधुनिकभाषाशास्त्रं निकामं विकलमासीदिति वैदेशिकैरपि तत्तद्विद्यापारङ्गतै-स्तस्यातीवोपयोग: कृत: स्वभाषाशास्त्रे ।

### शब्दानुशासनप्रशस्ति:

इदञ्च शब्दशास्त्रं ज्योतिषामपि ज्योति: । यतो हि शब्दो ज्योति:, तस्य प्रकाशनम् अन्वाख्यानम् प्रकृतिप्रत्ययतत्तदर्थप्रतिपादनं व्याकरणमेव करोति । तथा हि—

इदमन्धंतम: कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीपयेत् ।।

शब्दशास्त्रं पुरस्कृत्य शास्त्रान्तरापेक्षयास्य विशुद्धं वैशिष्ट्यं प्रकाशयद्भि: श्रीभर्तृहरिपादै: प्रति-तम् :—

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धति: ।।

(वा० प० १।१६)

वाग्देवताया भव्यं समुज्ज्वलं सर्वतोभावेन निरापदं प्रासादमधिरोढुं सोपानपथानां व्याकरण-मदं प्रथममतीवसुखदं सोपानम् । मुक्तिकामिनीं कामयमानां समाधिसमाहितमनसां मुनीनामपि सुखदा राजपद्धति: शब्दशास्त्रमेव । शब्दानुशासनस्य परिशीलनमात्रेणैवाञ्जस्येन मुक्ति: प्राप्तुं किमुत, शास्त्रान्तरमहोदधिपारकरणजन्यातिशयश्रमेणेति निष्कर्ष: ।

शब्दानुशासनं प्रस्तुवता विहितशब्दानुशासनतत्त्वसाक्षात्कारेण पदमञ्जरीकारेण विश्व-विश्रुतकीर्तिना श्रीहरदत्तमिश्रेण साधु प्रतिपादितम् : -

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥
रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रित मुखाः नराः ॥

(काशिकावृत्ति पृ० १४)

परिश्रममविगणयता दत्तावधानेन सर्वतोभावेन,तपःस्वाध्यायपरिपूतमनसा परमर्षिणा भाषितं सभाष्यं शब्दशास्त्रमहरहः समुपासनीयम् । यतो हि मुक्तिप्रदानां सर्वासां विद्यानां प्रदीपभूतमिदं व्याकरणशास्त्रम् ।

ये शब्दशास्त्रसंस्कृतां वाचमुद्गिरन्ति ते धृतरूपान्तरा देवा एव । व्याकरणसंस्कृतवागुच्चारका भूसुराः, न साधारणा मनुष्या इति भावः ।

चिकित्साध्यात्मशास्त्रवद् व्याकरणशास्त्रमपि जनानामतीवोपकारकम् । समर्थितमेतत् प्राप्त-व्याकरणशास्त्रप्रावीण्येन नमदनेककोविदकुलालिभूषितपादारविन्देन श्रीभर्तृहरिणा :—

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥

(वा० १।१४७)

यथा कायदोषाः चिकित्साशास्त्रेणापाक्रियन्ते,यथा च मनोदोषा अध्यात्मशास्त्राध्ययनेनापसार्यन्ते, तथैव वाग्दोषा व्याकरणशास्त्रेणेति त्रयाणां शास्त्राणां समाना कोटिः ।

व्याकरणमभिनन्दन् भगवान् शेषावतारोऽपि बभाणः—

सोऽयमक्षरसमाम्नायो वाक्यसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्वेवेदपारायणपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते" ।

(अ० १, पा० १, आ० २, पृ० १२६-१२७)

शब्दानुशासनस्य स्वरूपम्

सर्वशास्त्रोपकारकस्य शासनतः श्रेष्ठस्य गुणतो गरिष्ठस्य दुर्मेधसो दविष्ठस्य प्रधानवेदाङ्गत्वेन प्राप्तप्रतिष्ठस्य शेषावतारमहर्षिपतञ्जलिप्रकाशिननिगूढाशयस्य भर्तृहरिकैयटप्रभृतिविद्वद्धौरेयैः

भावेन व्यवस्थापितसकलांशस्य महर्षिपाणिनिप्रणीतशब्दानुशासनस्य स्वरूपनिरूपणं सम्प्रति शब्दशास्त्रे कृतिभूरिपरिश्रमाणां विदुषां सपर्यायै सादरं समुपह्रियते —

शब्दसाधुत्वप्रतिपादनपरेषु तेषु तेष्वाकरग्रन्थेषु भूयोभूयः समाहितचेतसा समीक्ष्यमाणेषु शब्दानुशासनस्य स्वरूपद्वयं समुपलभ्यते। एकं वैदिकलौकिकशब्दव्युत्पादकम्, अपरं परमार्थवस्तुनिरूपणपरम्। 'पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणमिदम्' इत्यादिनाऽऽद्यं स्वरूपं निर्दिष्टम्। 'इयं सा मोक्षमाणानाम्' इत्यादिना च द्वितीयं स्वरूपं संकेतितम्। द्वितीयं स्वरूपमग्रे विस्तरेण निरूपयिष्यते। सम्प्रति, व्युत्पाद्यन्ते प्रकृतिप्रत्ययविभागकल्पनया निरूप्यन्ते शब्दा येनेति व्युत्पत्तिगम्यं स्वरूपं निरूप्यते।

शब्दानुशासनत्वञ्चार्थविशिष्टशब्दनिष्ठपुण्यजनकतावच्छेदकसाधुत्वजातिविशेषव्यञ्जकत्वम्। अर्थविशिष्टेत्यनेन यस्य यदर्थबोधकत्वम्, तदर्थविशिष्टस्यैव तस्य साधुत्वं सूचितम्। अर्थविशेषनियन्त्रितसाधुत्वस्य स्वीकारेण दन्त्यसकारघटितस्य 'अस्व' शब्दस्य तुरङ्गमार्थेऽसाधुत्वेऽपि निर्धनेऽर्थे साधुत्वमव्याहतमेव। समवायेन पुण्यविशेषं प्रति स्वाभिव्यञ्जककण्ठाद्यभिघातादिजनककृतिमत्त्वेन साधुशब्दः कारणम्। तथा च समवायसम्बन्धावच्छिन्नपुण्यविशेषत्वावच्छिन्नकार्यतानिरूपितरचनाभिव्यञ्जककण्ठाद्यभिघातजनककृतिमत्त्वसम्बन्धावच्छिन्नव्याकरणबोधितशिष्टप्रयुक्तशब्दनिष्ठकारणतावच्छेदकत्वेन साधुत्वजातिः सिद्ध्यति। अत्र शिष्टप्रयुक्तत्वञ्च साक्षात् परम्परया वा। एवञ्च शिष्टैः साक्षादुच्चारितानां व्याकरणव्युत्पन्नानामनुकरणानां बाहुलकादिना बोधितानाञ्च सङ्ग्रहः। शब्दनिष्ठः पुण्यजनकतावच्छेदको धर्मो जातिविशेषः साधुत्वम्। अपभ्रंशनिष्ठः पापजनकतावच्छेदको धर्मविशेषोऽसाधुत्वम्। कत्वादिना साङ्कर्यन्तु साधुत्वजातेर्बाधकं न भवति। यथोर्धर्मयोर्लोके वैयधिकरण्यं प्रसिद्धम्, तयोरेव साङ्कर्यस्य जातिबाधकत्वम्। साधुत्वकत्वादिधर्मयोस्तु 'करोति' इत्यादि पदघटकः ककारः साधुः' इति व्यवहारस्यापि दर्शनेन सामानाधिकरण्यस्य सर्वसम्मतत्वात्।

## साङ्कर्यस्वरूपनिरूपणम्

अत्रायमभिसन्धिः--स्वसामानाधिकरण्य; स्वाभावसामानाधिकरण्य; स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व; एतत्त्रितयसम्बन्धेन परस्परविशिष्टत्वं साङ्कर्यम्। यथा भूतत्वमूर्त्तत्वयोः त्रितयसम्बन्धेन परस्परविशिष्टत्वान्न जातित्वम्। तथाहि–भूतत्वं विहाय मनसि मूर्त्तत्वस्य; मूर्त्तत्वं विहाय गगने भूतत्वस्य; पृथिव्यादिचतुष्टये चोभयोः सत्त्वात् परस्परविशिष्टत्वेन साङ्कर्यं जातित्वबाधकं भूतत्वमूर्त्तत्वयोः।

## साङ्कर्यस्य जातित्वदूषकत्वम्

साङ्कर्यस्य जातित्वदूषकताबीजन्तु स्वसामानाधिकरण्य; स्वाभावसामानाधिकरण्य; एतदुभयसम्बन्धेन जातिविशिष्टजातित्वं यत्र, तत्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभाव इति नियमभङ्ग एव। यथोक्तोभयसम्बन्धेन पृथिवीत्वविशिष्टं द्रव्यत्वं यदि पृथिवीत्वसमानाधिकरणात्यन्ताभावस्यात्, तदा तस्य व्यापकत्वं विहन्येत्। एवञ्च व्यापकताभङ्ग एव दूषकताबीजम्।

## साङ्कर्यस्य जातित्वबाधकत्वे प्रमाणाभावप्रदर्शनम्

वस्तुतस्तु तादृशनियमे मानाभावान्न साङ्कर्यं जातिबाधकम्। प्रकृते च साधुत्वकत्वयोरुक्तैश्च त्रिभिः सम्बन्धैः परस्परवैशिष्ट्यसत्त्वेऽपि साङ्कर्यं न दोषावहम्।

तथाहि—साधुत्वं साधुगगनादिशब्दघटकगकारादावस्ति, कत्वं नास्तीति साधुत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तस्य। साधुकृष्णादिशब्दघटकककारे कत्वं साधुत्वञ्चेति स्वसामानाधिकरण्यम्। असाधु 'कपड़ा' आदिशब्दघटककारे कत्वमस्ति, साधुत्वन्तु नास्तीति स्वाभावसामानाधिकरण्यमिति कत्वे साधुत्ववैशिष्ट्यसत्त्वाज्जातित्वं तस्य न सिद्ध्येत्, इति चेत्, यत्र स्वव्यापकात्यन्ताभावप्रतियोगित्वसम्बन्धेन जात्योः परस्परवैशिष्ट्यम् तत्रैव यदि साङ्कर्यम्, तदा तस्य जातित्वबाधकत्वम्। यथा नरत्वव्यापकात्यन्ताभावप्रतियोगित्वं सिंहत्वे, सिंहत्वव्यापकात्यन्ताभावप्रतियोगित्वं नरत्वे। 'यत्र यत्र नरत्वं तत्र तत्र सिंहत्वाभावः, यत्र यत्र सिंहत्वं तत्र तत्र नरत्वाभावः' इतिव्याप्तिसत्त्वात् ते जाती यदि भगवति नरसिंहे स्वीक्रियेयाताम्, तदा साङ्कर्यलक्षणाक्रान्तत्वात् तयोर्जातित्वं न स्यादिति विलक्षणैव काचन तत्र जातिः स्वीकर्त्तव्या, न नरत्वम्, नापि सिंहत्वम्। एवञ्च स्वव्यापकाभावप्रतियोगित्वस्य कत्वादिसाधुत्वयोरभावान्न साङ्कर्यं तयोर्जातित्वे बाधकम्।

ययोः पदार्थयोर्लोके यदि भेदः प्रसिद्ध्यति, तदा तयोर्यदि काचनैका जातिः स्वीक्रियेत, तदा तयोर्भेदस्य भङ्गः स्यात्। स च भेदभङ्गो जातेर्बाधकः। यदि नरत्वं सिंहत्वञ्च क्वचिदप्येकत्र स्वीकृतं स्यात् तदा तत्र 'नराभिन्नः सिंहः' इति तादात्म्यसम्भवात् 'नरो न सिंहः, सिंहो न नरः' इति भेदो भज्येत। ककारादिस्थले तु साध्वसाध्वोः ककारयोः सत्त्वात् 'साधुः ककारः' इति तादात्म्यस्येष्टत्वान्नास्ति भेदभङ्गरूपो दोष इति साङ्कर्यं कत्वसाधुत्वयोर्जातित्वे न बाधकमिति रहस्यम्। एवमेव 'अश्वो न गर्दभः' गर्दभो नाश्वः' इति भेदस्यैवेष्टत्वादाश्रयभेदभङ्गभियाऽश्वतरेऽपि न गर्दभत्वम्, नाप्यश्वत्वमिति। भूतत्वमूर्त्तत्वयोः पृथिव्यादिचतुष्टये सामानाधिकरण्येनैव सिद्धिरिति समानाधिकरणयोर्जात्योः पृथिवीत्वद्रव्यत्वयोरिव साङ्कर्यं न दोषावहम्। यथा व्याप्यव्यापकभावापन्नजात्योः सामानाधिकरण्यं न दोषावहम्, किन्तु व्याप्तिप्रयोजकत्वेन गुण एव तथाभूतत्वमूर्त्तत्वयोः साङ्कर्यमिष्टमेवेति भावः।

साङ्कर्याद् भूतत्वमूर्त्तत्वयोर्न जातित्वमिति प्राचीनमतस्य प्रत्याख्यान एव तात्पर्यम्। दीधितिकाराणां मते तु। जन्यद्रव्यसमवायिकारणतावच्छेदकतया भूतत्वं जातिः सिद्ध्यति तस्याः पृथिव्यादिचतुष्टयवृत्तित्वेन साङ्कर्यसम्भवः। न चाकाशे भूतत्वव्यवहारानुपपत्तिः, बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वेन भूतत्वव्यवहारस्य भाक्ततयादोषात् परमत्रमते घटादिरूपान्त्यावयविद्रव्ये भूतत्वं जातिः कथङ्कारं सिद्धयतीति चिन्त्यम्। तादात्म्यसम्बन्धावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नद्रव्यनिष्ठ[illegible]तावच्छेदकतया तत्रापि भूतत्वजातिः सिद्ध्यतीति कश्चित्।

स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वव्यापको यः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावरूपनियमभङ्ग एव साङ्कर्यस्य जातित्वबाधकत्वे प्रमाणमिति तु वक्तुमशक्यम्, तादृशनियमे प्रमाणाभावात्, व्याप्तिग्राहकानुकूलतर्काभावात्। सर्वत्र साङ्कर्यस्य जातित्वबाधकत्वे न काचनापि वाचोयुक्तिः।

एवमेव घटादौ पृथिवीत्वमस्ति, शरीरत्वं नास्ति, तैजसादिशरीरे शरीरत्वमस्ति, पृथिवीत्वं नास्ति। अस्मदादिशरीरे चोभयमिति साङ्कर्याच्छरीरत्वं न जातिरितितार्किकमतं तर्कपराहतमेव! यतो हि—गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वस्येव सुखादिसाक्षात्कारणतावच्छेदकतया शरीरत्वस्य जातित्वसिद्धौ बाधकाभावः। 'पृथिवीशरीरम्' इति व्यवहारसत्त्वादाश्रयभेदभङ्गाभावः। समवायसम्बन्धावच्छिन्नक्रियात्वावच्छिन्नकार्यतानिरूपित कारणतावच्छेदकतया लाघवाद् यथा मूर्त्तत्वजातिः कल्पयितुं शक्यते, तथैव भूतपदनिष्ठशक्ततानिरूपितपृथिव्यादिनिष्ठशक्यतावच्छेदकतया भूतत्वं जातिर्लाघवात् सेत्स्यति। द्रव्यवृत्तिकपालादौ द्रव्यान्तरोत्पत्तिवारणाय तत्प्रतिबन्धकतावच्छेदकतया भूतत्वं जातिः सिद्ध्येदिति केनचिदुक्तमिति; तत्, न; विनिगमनाविरहान् मूर्तत्वस्यापि तथैव सिद्धेः। लाघवरूपयुक्तेस्तुल्यत्वाद् यथा कारणतावच्छेदकतया जातेः सिद्धिः, तथैव शक्यतावच्छेदकतयापि जातिसिद्धौ न किमपि बाधकम्, विनिगमनाया उभयत्र समानत्वात्। अत एव जलपदशक्यतावच्छेदकतया जलत्वस्य जातित्वं साधितं वर्द्धमानोपाध्यायैः।

समवायसम्बन्धेन भोगं प्रति अवच्छेदकतासम्बन्धेन शरीरस्य कारणतया तदवच्छेदतया शरीरत्वस्यापि जातित्वे नास्ति काचनापि विप्रतिपत्तिः।

### शब्दानुशासनरचनोद्देश्यम्

इतिवृत्तस्य पत्रागामवलोकनेन सम्यगिदं निर्धारयितुं शक्यते यल्लोके जनैः कामं प्रयुज्यमाना पुनः पुनर्व्यवह्रियमाणा काचनापि वाग् (बोली) जनभाषापदमधिरोहति; निकामं विस्तरञ्चैति, भाषान्तरसम्पर्कात् साङ्कर्य दोषदूषिता च सम्पद्यते, तस्या व्यवह्रियमाणानां शब्दानां मर्यादातिक्रमो निःसीमो भवति, तदा तस्याः स्वरूपनिर्धारणाय व्यवहारपरिधिनिर्धारणाय च सततं प्रयतमाना निर्मलशेमुषीका वीतरागा विद्वांसः कांश्चन नियमान् निर्मान्ति। तैश्चोत्सर्गापवादनियमैः तस्या भाषाया उच्छृङ्खलतां निवारयन्ति, सीमानञ्च दृढं बध्नन्ति। तादृशा एव नियमा व्याकरणपदभाजो भवन्ति। ते च नियमा भाषामविरलगत्या प्रविशतो नवनवान् शब्दान् निरुन्धन्ति, भाषायाः स्वरूपं रक्षन्ति, साङ्कर्यदोषान् निवारयन्ति। अत एव 'वाङ्मलानां चिकित्सितम्' इति यशोमालया मण्डितं भवति शब्दशास्त्रम्। तात्पर्यमिदमत्र फलति यत् सिद्धानामेव शब्दानां लघुनोपायेनोत्सर्गापवादरूपपरिकल्पनेन ज्ञानं साध्यते व्याकरणेन, न तु नवनवाः [illegible]त्पाद्यन्ते।

### अन्यभाषाशब्दानुशासनमिव संस्कृतभाषाशब्दानुशासनम्

कस्या अपि भाषाया व्याकरणबोधानन्तरमेव तां भाषामवगच्छन्ति जनाः प्रयुञ्जन्ति च प्रतिपादनमिदमतीवोपहासास्पदम् । दृश्यते हि लोके जन्मप्रभृत्येव व्याकरणज्ञानमन्तरैव बाला स्वमातृभाषामनायासेन व्यवहरन्ति । अवश्यमिदमेकं वस्तु वर्तते यत् शब्दानुशासनस्य सम्यक् परिशीलनेन भाषायां काचन प्रौढिः, वाक्यानां पदानाञ्च शुद्धता, समीचीनपदविन्यासः, वाक्यानां पूर्वापरसंयोजनवियोजनसमन्वितविन्यासः, इत्यादिसौष्ठवसम्पादनस्य काचन कला समुदेति । व्याकरणशास्त्रस्येतिवृत्तपर्यालोचनेन पर्याप्तमवगन्तुं शक्यते यत् व्याकरणमन्तरापि जना भाषामवगच्छन्ति, प्रयुञ्जन्ति, अनायासेन व्यवहरन्ति, चेत्यस्य निदर्शनं स्वमातृभाषाप्रयोग एव ।

### पूर्वं भाषा, पश्चात् व्याकरणम्

शब्दानुशासनशास्त्रस्येतिहासविदो विदन्त्येव यत् यदा व्याकरणशास्त्रं नात्मलाभं लभमानमासीत्, नापि तस्याध्ययनपरिपाटी प्रसृताऽऽसीत्; तदानीमपि जनाः, येषां संस्कृतभाषा लोकभाषाऽऽसीत्, विनापि व्याकरणनियमावगमम्, विनापि; भूधातोस्तिप्रत्यये गुणेऽवादेशे च भवतीत्यस्य निष्पत्तिर्भवतीतिबोधंमन्तरापि 'भवति' इति प्रयुञ्जाना आसंन् । तात्पर्यमिदमस्ति यत् व्याकरणाभावयुगेऽपि 'गच्छति' 'शक्नोति' इत्यादयः प्रयोगा व्यवह्रियमाणा आसन्, वेदाश्चाप्यधीयमाना अ सन् यदा प्रकृतिप्रत्ययादिविचार एव नप्रादुर्भूत आसीत्, न च गणभेदेनैकस्य धातो रूपभेदो भवतीति समीक्षैव समुदिताऽऽसीत् ।

### भाषाज्ञानाय व्याकरणज्ञानस्यानिवार्यता नास्ति

भाषाज्ञानार्थं शब्दानुशासनज्ञानमनिवार्यं नास्तीति व्याकरणप्रयोजननिरूपणावसरे 'वेदान्नो वैदिकाः शब्दाः, सिद्धा लोकाच्च लौकिकाः, अनर्थकमिदं व्याकरणम्' [महाभा० १।१।१] पृ० ३१] इति भाष्योद्धृतवचनेन स्पष्टं भवति । व्यवहारे लोकाः प्रतिपदं शब्दानुशासनस्य निखिलान् नियमानविकलं नानुसरन्ति; प्रत्युत; वैपरीत्यमाचरन्ति । अस्य साक्ष्यं भाष्यं स्वयमेव समुपस्थापयति—"अजेर्व्यघञपोः" [२।४।५६] इति सूत्रे वैयाकरणरथकारसंवादप्रसङ्गप्रदर्शनेन । तथा हि—'एवं हि कश्चिद् वैयाकरण आह—'कोऽस्य रथस्य प्रवेता' इति । सूत आह—'अहमायुष्मन् ! अस्य रथस्य प्राजिता' इति । वैयाकरण आह—'अपशब्दः इति । सूत आह –प्राप्तिज्ञो देवानांप्रियः, न तु इष्टिज्ञः (प्रयोगज्ञाता), इष्यते एतद्रूपम्' इति । वैयाकरण आह—'अहो खल्वेतेन दुरुतेन बाधामहे' इति । सूत आह—न खलु वेञः सूतः, सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्' ।

नियमपरिशुद्धानपि शब्दान् प्रयुञ्जानाः संकुचन्ति शाब्दिका इत्यस्यापि निदर्शनं पातञ्जलभाष्यमेव । तद् यथा 'न हि वचिरन्तिपरः प्रयुज्यते, बहुवचनपर इत्यन्ये, झिपर इत्यपरे' इत्यादीनि प्रचुराणि बचनानि तत्रतत्र भाष्ये समुपलभ्यन्ते ।

लोकानां व्याकरणस्य नियमानामुपेक्षणम्; विपर्यासः, न्यूनता, चात्, बाहुलकात्, निपातनात्, आकृतिगणत्वात्, आप्तवचनात्; सिद्धयति' इत्यादिशब्दैः शास्त्रकारैस्तत्र तत्र प्रदश्यते।

अत्रेदं तत्त्वम्—भाषासरितः प्रवाहः शनैःशनैः पुरो धावति, ते ते नवा नवाः शब्दाः प्रवाहे पतन्ति, येषां सिद्धिप्रकारः शास्त्रकृद्भिर्न प्रदर्शितोऽस्ति, तेषां साधुत्वप्रदर्शनाय निपातनाद्युपायाः प्रदर्श्यन्ते। त एवोपाया निर्दिशन्ति यद् भाषाः सर्वथा व्याकरणं नानुसरन्ति। अपि तु व्याकरणमेव भाषामनुसरति। अत एव पाणिनिसूत्रैः सर्वतोभावेन सर्वेषां संस्कृतशब्दानां सिद्धावसम्पन्नायां कात्यायनवार्त्तिकानि भाष्येष्टयश्च प्रायः क्रमेण वर्षशतकद्वयमतीत्यात्मलाभमलभन्त। एवं गच्छता कालेन भाषान्तरसंपर्कात्, देशान्तरसंपर्काच्च प्रवाहे प्रपतताम् 'कालीन, पुङ्क्षु, अक्रामि, भ्रामयन्, प्रभृतीनां पदानां सिसाधयिषा मुग्धबोध सारस्वत हेमशब्दानुशासनप्रभृतीनां शब्दशास्त्राणामाविर्भावनया देशममुं स्पृहणीयगुरुतायाः परां काष्ठां प्रापितवती।

कवयस्तु; "छन्दसि लिट्" [३।२।१०५], "लिटः कानज् वा" [३।२।१०६], "क्वसुश्च" [३।२।१०७], इति सामान्ये छन्दसि लिटः स्थाने विधीयमानौ क्वसुकानचावपि छान्दसाविति मुनित्रयमतमुपेक्ष्य 'तं तस्थिवांसं नगरोपकण्ठे' इति प्रयुञ्जाना आत्मनो निरङ्कुशत्वासह्यकलङ्कपङ्कं क्षालयितुं नापारयन्। 'कित्करणसामर्थ्याद् भाषायामपि क्वसुकानचौ भवतः' इति समादधानाः केचन वैयाकरणाभासाः; सूत्रकृता 'छन्दसि' इति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च, भाष्यवार्तिकयोरपि क्वसुकानयोः 'छन्दस्युभयथा' इति वचनात् सार्वधातुकत्वेन "सार्वधातुकमपित्" इति ङित्त्वादेव 'आजिवान्' इत्यादौ कित्त्वकार्याणां नलोपादीनामन्यथासिद्धिमाशङ्क्य 'तितीर्वान्' 'तिस्तिराणः' इत्यादौ "ऋच्छत्यृताम्" [७।४।११] इति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तं प्रदर्शयद्भ्यां हरदत्तमिश्रमाधवाभ्यां भर्त्सिताः।

"जनिकर्त्तुः प्रकृतिः" [१।४।३०], "तत्प्रयोजको हेतुश्च" [१।४।५५] इत्यत्र षष्ठीसमासनिषेधकम् "तृजकाभ्यां कर्त्तरि" [२।२।१५] इति स्वकृतमपि नियममनिर्वाहयन् भगवान् पाणिनिः, 'दर्भपवित्रपाणिः प्राङ्मुख उपविश्याचार्यः सूत्राणि प्रणिनाय, तत्र वर्णेनाप्यनर्थकेन न भवितव्यम्, किमियता सूत्रेण!' इति पाणिनीयव्याकरणेऽगाधां श्रद्धामादधानः 'उपलब्धौ यत्नः क्रियताम्' इत्यत्र 'उपलभा' इत्यस्य स्थाने उपलब्धिपदं प्रयुञ्जानो भगवान् पतञ्जलिरपि स्पष्टीकरोति यल्लोको व्यवहारे व्याकरणस्य दासत्वं सर्वथा नाङ्गीकरोति।

किम्बहुना, लिङ्गानुशासनस्य प्रत्याख्याने 'लिङ्गमशिष्यम्' लोकाश्रयत्वाल्लिङ्गस्य' इति व्याहरता भगवता पतञ्जलिना व्याकरणापेक्षयापि लोकानामधिकं प्रामाण्यं लिङ्गविषयेऽभ्युपगतम्।

अन्यत्रापि बहुषु स्थलेषु शब्दानुशासननियमेनानिष्पत्तौ—'सिद्धमेतत्, कथम् ! लोकात्' इति लोकानां साक्ष्यमुद्धृतम्। अत एव शब्दानुशासनस्वरूपप्ररूपणप्रस्तावे भाष्य आशङ्कितम्—शब्दानां तदर्थानां तेषां सम्बन्धानाञ्च सिद्धत्वात् तद्व्युत्पादनपरं व्याकरणमिदं निष्प्रयोजनम् 'सिद्धे शब्दार्थसम्बन्धे' इत्यनेन। अत्र सिद्धशब्दो नित्यपर्याय इत्यपि महताऽऽडम्बरेण तत्रैव भाष्ये समर्थितम्।

इदमत्राकूतम्—जातिस्फोटलक्षणस्य व्यक्तिस्फोटलक्षणस्य वा शब्दस्य नित्यत्वेन, कार्यशब्दवादिनां मतेऽपि प्रवाहनित्यत्वेन जातिलक्षणस्यार्थस्यापि नित्यत्वेन; द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यत्वेन वा। अत्रासत्योपाधिः जातिरूपः। जातिर्हि—अद्वैतिनां मते आविद्यको धर्मविशेषः। अथवा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वाधिष्ठानभूतं ब्रह्मैव विशेष्यम्, विशेष्यमेव च द्रव्यम्।

शब्दार्थयोरनित्यत्वपक्षे च तयोरिव सम्बन्धस्यापि शक्तिरूपस्य तादात्म्यस्य व्यवहारपरम्परयाऽनादित्वान्नित्यत्वेनापूर्वशब्दनिष्पादनद्वाराऽर्थविशेषसम्बन्धनिष्पादकत्वं सिद्धशब्दार्थसम्बन्धबोधकत्वं वा व्याकरणशास्त्रस्य स्वरूपं सम्भवितुं नार्हति।

अग्रे च लोकव्यवहारोपष्टम्भेन शब्दार्थसम्बन्धानां नित्यत्वं साधितं भगवता। अनित्येषु वस्तुषु लोकैरन्यथा व्यवह्रियते, नित्येषु चान्यथा। शाब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वकः। अतः शब्दादीनां व्याकरणेन निष्पाद्यत्वं न संभवति। घटादयश्च जलाहरणादिकार्यार्थिभिः कुलालकुलात् समानीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते। शब्दाश्च घटादय इव नैव शाब्दिककुलादानीयन्ते, न चोत्पादविनाशयुक्ता वोपलभ्यन्ते। एवञ्च व्याकरणानिष्पाद्यस्वरूपं जन्मभावव्यवहारविजातीयव्यवहारविषयत्वेन जन्यभाववैजात्यरूपं वा नित्यत्वमनुमीयते शब्दानाम्।

### शाब्दिकसम्मतनित्यत्वे भाष्यप्रामाण्योपन्यासः

'कथं पुनर्ज्ञायते—सिद्धः, शब्दोऽर्थः, सम्बन्धश्चेति ! 'लोकतः' (वा), यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावाः, निर्वृत्तौ तावत्तेषां यत्नः क्रियते तद्यथा—घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह—कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह—कुरु शब्दान् प्रयोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान् प्रयुङ्क्ते' (१।१।१, आ० पृ० ४५) 'तावत्येवार्थम्' इत्यस्य 'बुद्ध्या वस्तु निरूप्येत्यर्थः' इति कैयटः। वैयाकरण कुलमगत्वेत्यर्थः' इति नागेशः।

अन्यत्राप्यन्योन्याश्रयदोषं परिहरता—'परिहृतमेतत्, कथम् ! शब्दानां नित्यत्वात् । 'एतेन सर्वेऽप्यन्योन्याश्रयदोषाः परिहृताः' इति भगवतोक्तम् । एतेनेत्यस्य शब्दानां नित्यत्वेनेत्यर्थः । अतोऽपि व्याकरणस्य नूतनशब्दानिष्पादकत्वं सुतरां सिद्धयति ।

एवमेव शब्दानुशासनशास्त्रनिर्माणरीतिनिरूपणाधिकरणे 'शब्दानुशासनमिदानीं कर्त्तव्यम्, तत् कथं कर्त्तव्यम् ! किं शब्दोपदेशः कर्त्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति' इत्यत्र शब्दोपदेशशब्देन मन्त्रवत् सिद्धानां शब्दानामुपदेशः सूचितः, न तु निष्पाद्यानामिति । किं बहुना, अपशब्दोपदेशेन सिद्धानामेवापशब्दानामप्युपदेशः, न तु असिद्धानाम् तथा सत्युपदेशपदस्वारस्यमङ्गप्रसङ्गः स्यात् ।

## शब्दानुशासनसम्पाद्यशब्दान्वाख्यानस्वरूपम्

व्याकरणेन शब्दानामन्वाख्यानं क्रियते । अन्वाख्यानं नाम शब्दसंस्कारः । तच्चान्वाख्यानं त्रिविधम्-क्रमिकम्, पदावधिकम्, वाक्यावधिकञ्चेति । तत्र च प्रयोगीयवर्णोच्चारणक्रमानुरोधेन संस्काररूपमाद्यम् । तस्य च स्वाभाविकत्वान्न तत्र किमपि प्रमाणान्तरमपेक्ष्यते । यत्र च पदं वाक्यं वोच्चार्यैककालावच्छेदेन घटकानां वर्णानां संस्कारः सम्पाद्यते । तत्र पदावधिकं वाक्यावधिकञ्चान्वाख्यानमाख्यायते । अयञ्च द्वितीयः पक्षो विप्रतिषेधसूत्रे 'अन्तरङ्गपरिभाषोदाहरणप्रदर्शनप्रसङ्गे 'वैक्ष्यमाणिः, सौत्थितिः' इत्यत्र 'वृद्धिश्च प्राप्नोति, एकादेशश्च । परत्वाद् वृद्धिः स्यात्, एकादेशो भवत्यन्तरङ्गः' इति भाष्योक्तिपर्यालोचनेन पदावधिकान्वाख्यानं विना वृद्ध्येकादेशयोर्युगपत् प्राप्तेर्वक्तुमशक्यत्वेन छन्यते ।

वाक्यावधिकेऽन्वाख्याने च 'अस्ति पुनः किञ्चिद् भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद् दोषान्तरमेवेति । अस्तीत्याह - इह 'कानि सन्ति' 'यानि सन्ति' 'कौ स्तः' योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते' इति "न पदान्तः" १।१।५८) सूत्रस्थभाष्यमेव प्रमाणम् । अन्यथा वाक्यान्वाख्यानाभावे पूर्वत्वेन दृष्टस्य कार्याभावात् स्थानिवत्त्वाप्राप्त्या. तदसङ्गतमेव स्यात् ।

अत्र पदं वाक्यं वोचार्य्य व्याकरणेनान्वाख्यानं भवतीत्यत्र भाष्यप्रामाण्यप्रदर्शनमेव पदानि वाक्यानि च सर्वाणि सिद्धान्येवेति न किञ्चिद् व्याकरणस्येतिकर्त्तव्यतां पश्यामः ।

अर्थबोधजनकताशक्तिः साधुष्वेव, नासाधुष्वित्यपि व्याकरणस्य प्रतिपाद्यं नास्ति । यतो हि शक्तिग्राहकेषु व्याकरणादिषु श्रेष्ठस्य व्यवहारस्योभयपि समानत्वमस्ति. अर्थबुबोधयिषया शब्दानां प्रयोगात्, अर्थश्चोभयतः समानभावेन बुद्ध्यते । यद्यपि व्यवहारदर्शनस्य शक्तिग्राहकत्वं न सम्भवति, जन्मकाले

तद्बोधकशब्दाभावात्, शक्तिग्रहाभावे इष्टसाधनत्वाभावेन बालकानां पयःपाने प्रवृत्तिर्न स्यादिति वक्तुं शक्यते, तथापि जन्मान्तरीयव्यवहारदर्शनं स्वसंस्कारद्वारा शक्तिस्मारकं भवति । संस्कारोद्बोधकञ्च जीवनादृष्टमेवेति कल्प्यते । पूर्वजन्मानुभूतशक्तिस्मरणादेव बालानां तिरश्चां च बोधो भवति । पश्वादीनामपि स्वजात्यनुसारेणैव प्रतिनियता काचित् प्रतिमा दृश्यते । अतस्तेषामप्यनादिवासनयैव तद्ग्रहो लक्ष्यते ।

अत्र व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणात्, अव्युत्पन्नानाञ्चापभ्रंशेन शक्तिभ्रमाद् बोधसिद्धेर्नापभ्रंशेषु शक्तिः स्वीकर्तव्येति तार्किकतर्कः समुज्जृम्भते ।

अत्रेदं प्रतिविधानम् —अपभ्रंशशब्दसमकालमेव झटित्यर्थबोधो भवति, नहि तेन साधुस्मरणमनुभूय इत्यनुभवप्रामाण्यादपभ्रंशेषु शक्तिरवश्यं स्वीकर्तव्या । अन्यथा तद्वाचकसाधुशब्दाज्ञानवतां बोधो नोदयमासादयेत् । उच्चार्यमाणः शब्दः सम्प्रत्यायको भवति, न सम्प्रतीयमानः (म० भा० १।१।६८) इति भाष्यादपभ्रंशेन स्मृतात् साधुशब्दाच्च बोधो न स्यात् ।

अव्युत्पन्नानाम् 'असाधुशब्दे शक्तिरस्ति' इति शक्तिभ्रमाद् बोधो भवति । अन्यप्रकारकत्वेन ज्ञातस्यैव तदभाववत्तत्प्रकारकज्ञानरूपभ्रमसम्भवेन पामराणां शक्तिप्रकारकघटादिसाधुपदविशेष्यकज्ञानाभावेन 'घड़ा, इत्याद्यपभ्रंशशब्दे तद्भ्रमो नोपपद्यत इति शङ्का तु यस्य 'घटपदं घटत्वावच्छिन्ननिरूपितशक्तिमत्' इत्याकारको बोधो विद्यते, तस्य यथाकञ्चित् 'घड़ा' पदम् 'घटत्वावच्छिन्ननिरूपितशक्तिमत्' इति भ्रमो जातः, पश्चाच्च 'घड़ा' पदं घटत्वावच्छिन्ने शक्तमिति पामराणां ज्ञानपरम्परा जातेति प्राथमिकज्ञानगतभ्रमत्वमादायैव साजात्यादुत्तरोत्तरस्मिन् भ्रमत्वव्यवहारः कल्पनीय इत्यापातरमणीयमेव प्रतिभाति, यतो हि तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन 'घड़ा' इत्यादिपदे घटत्वरूपानुपूर्व्यभावत्तानिश्चयस्य सत्त्वेन शक्ततावच्छेदकानुपूर्वीमत्त्वज्ञानस्यैव शक्तिभ्रमत्वनिश्चायकत्वात् घड़ादिपदे शक्तिभ्रमस्यानुपपत्तिस्तदवस्थैव स्यात् । सकलदेशशिष्टैः सर्वेऽपभ्रंशा न परिगृह्यन्ते, संस्कृतशब्दास्तु परिगृह्यन्त इति लाघवात् संस्कृतशब्देष्वेव शक्तिरस्ति, अपभ्रंशानां तु शक्तिभ्रमाद् बोध इत्यपि न प्रमाणकोटिमाटीकते, कम्बेजदेशे शवधातुर्गत्यर्थे, विकारे (मृतके) अर्थे त्वार्यदेशे प्रयुज्यते ।

एवमेव 'हम्म' 'रंह' इत्यादि धातवोऽपि सुराष्ट्रादिदेशनियता एवेति सकलदेशशिष्टपरिगृहीतत्वस्य संस्कृतेऽप्यभावात् । तथा च भाष्यम्- 'एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा – शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते 'शव' इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु गमिमेव त्वार्याः प्रयुञ्जते, दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु' (म० भा० प० आ०) । वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्याप्यपभ्रंशे

शक्तिः सिद्ध्यति। अपभ्रंशानां शक्तत्वादेव केनचित् साधुशब्दे समुच्चारिते स्त्रीशूद्रबालानामर्थसंशये शक्तत्वेनोक्तसंस्कृतशब्दाज्ञानात् तदपभ्रंशेन निर्णयो भवति।

आर्यम्लेच्छाधिकरणेनापशब्दानामशक्तत्वं न प्रतिपाद्यते, किन्तु वेदार्थनिर्णये तेषामेव तदधिकारित्वाद् वैदिकशब्दार्थसन्देहे यं शब्दं यत्रार्थे आर्याः प्रयुञ्जते तेन शब्देन तदर्थ एव ग्राह्य इति निर्णीयते। 'तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, तमेव च बुध्यन्ते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते, तथाप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतैवेति सिद्धान्तितम्। तत्र हि 'शवतिर्गतिकर्मा' इत्याद्युक्तभाष्याद् दयोरपि शक्तिग्रहाद् बोधेनोभयत्रापि साधुत्वेन शक्तित्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद् वेदे तद्बोध एवोचित इति। एवञ्चानार्यैरपि यज्ञे दीर्घशूका एवोपादेयाः, अयज्ञे त्वनार्यैः प्रियङ्गव एवोपादेया इति विशेषः इति नागेशः (वै० ल० म०, श० नि० पृ० ६०)

न्यायभाष्यकारोपि आप्तः खलु साक्षात् कृतधर्मा यथा दृष्टस्यार्थस्य चिरव्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्तऋष्यार्यम्लेच्छानां समानलक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति' (न्या० सू० १।१।७) इति प्रतिपादयन्नपभ्रंशे स्पष्टं शक्तिं स्वीकृतवान्।

सूत्रकृतापि 'सामयिकः शब्दादर्थप्रत्ययः' (वै० सू० ७।२।२०) इति सूत्रेण शब्दजन्योऽर्थविषयको बोधः सामयिकःसङ्केतकृतः' इत्यर्थकेन शब्दशब्देन शब्दापशब्दयोरुभयोरपि ग्रहणादुभयोरपि शक्तत्वं सूचितम्।

यदि वेदार्थस्य सामयिकत्वं सम्भवति, वेदवाक्यस्य व्यावहारिकवाक्यभिन्नत्वेनार्थेनाज्ञातसम्बन्धत्वात् तत्कल्पने सङ्केतापातात् सापेक्षप्रामाण्यापत्तिरापतेदिति विभाव्यते; तदपि न, लोकवेदयोरर्थभेदाभावाद् वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकतया सङ्केतान्यानपेक्षतयाऽनपेक्षमेव प्रामाण्यमित्यस्य वक्तव्यत्वात्।

अथापभ्रंशे शक्तिः स्वीक्रियते, तर्हि च्युतसंस्कृतेर्दोषत्वबीजस्य शाब्दबोधाजनकत्वरूपस्याभावात् काव्ये च्युतसंस्कृतेर्दोषत्वं न स्यात्। तल्लक्षणं तु काव्यप्रदीपकृता—'यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत्, तत्तद्भाषायां च्युतसंस्कृतीत्यर्थः इत्युक्तम्। उदाहरणं तु—'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः (कि० १७।६३)। अत्र आङो यमहनः' (पा० सू० १।३।२८)' स्वाङ्गकर्मकाच्च' (वा० ६२५) इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्, तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात्, च्युतसंस्कारत्वम्' (सा० द० ७।४) इति, तदपि न, काव्ये च्युतसंस्कृतिदोषस्य दूषकताबीजं शाब्दबोधाजनकत्वं नास्ति किन्तु विप्रसभायां चाण्डालदर्शनेनैव सहृदयोद्वेग एवेति।

अपभ्रंशस्य शक्तत्वादेव 'एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति' इति भाष्यं सङ्गच्छते ।

एतेन 'अर्थाय ह्येते उच्यन्ते शब्दाः, न धर्माय' इति शबरस्वामिनोक्तं पराहतम् । 'तदशक्तिश्चानुरूपत्वात्' (मी० द० १।३।२८) इत्यस्य जैमिनिसूत्रस्याप्ययमर्थो यत्— अपभ्रंशा अपि साधवः, तेऽपि साधयन्त्यर्थमिति पूर्वपक्षे; 'अन्यायश्चानेकशब्दत्वम्' (मी० द० १।३।२६) इति केचिदेव साधवः, न सर्वे इति मनसि निधाय, तर्हि साधौ प्रयोक्तव्येऽसाधूच्चारणं कथम् ? इत्याशङ्क्य 'शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्' (मी० द० १।३।२५) इति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात् । यथा शुष्के पतिष्यामीति कर्दमे पतति, तथा साधौ प्रयोक्तव्येऽसाधोः प्रयोगः' ।

एवञ्चैतावता प्रबन्धेनेदं प्रतिपादितं भवति यत् संस्कृतशब्दा अपि सिद्धाः, तेषामर्थाः, शक्तिः, लिङ्गानि च सिद्धानि सन्ति, लोकतश्च ज्ञातानि भवन्ति । एवमपभ्रंशानामपि विषये बोद्धव्यम् । एवं सिद्धे सति शब्दानुशासनस्य साध्वसाधुशब्दविवेकज्ञानपूर्वकंसाधुशब्दप्रयोगे धर्मः, व्याकरणव्युत्पादिताश्च शब्दाः साधवः, अन्येऽसाधव इत्यत्र तात्पर्यमध्यवस्यति ।

अत एव व्याकरणस्य साक्षात्परम्परया च प्रयोजनप्रतिपादनप्रसङ्गे रक्षोहागमलध्वसन्देहानां साक्षात् प्रयोजनत्वं भाष्ये प्रतिपादितम् । लोके 'अदुहत' 'जहार' इत्यादावदृष्टान् लोपागमवर्णविकारान् । 'अदुह' 'जभार' इत्यादौ वेदे दृष्ट्वाशाब्दिको भ्रमेण पाठान्तरं कल्पयेत् । दृढतराभ्रंशशङ्कयाऽऽचार्येष्वविश्वासात् तेषां वचनाद् भ्रमनिवृत्तिस्तु दुर्लभैव । शाब्दिकस्तु न व्यामूह्येत्, वेदार्थंश्चाध्यवरयेत् । एवञ्च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वा मोक्षश्च पुरुषार्थौ व्याकरणाध्ययनस्य फलमिति वेदरक्षकं व्याकरणमिति सिद्ध्यति ।

यस्मिन् यागे इति कर्तव्यतोपदिष्टा । यागान्तरेणोपजीव्यते सा प्रकृतिः, येनोपजीव्यते सा विकृतिः । प्रकृतिवद् विकृतिः कर्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग् विजानाति । तत्राग्नेर्मन्त्रोऽस्ति 'अग्नये त्वा जुष्टं निर्वयामि' इति । तत्र 'सौर्यं' 'चरुं' निर्वपेद् ब्रह्मवर्चसकामः' इति सौर्ये चरौ मन्त्र ऊह्यते—'सूर्याय त्वा जुष्टं निर्वपामि' इति । यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्योहेऽनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात् तत्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणः साङ्गत्वञ्चेति बोध्यम् । ऊहज्ञस्य ह्यार्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमित्यैहिकसुखप्राप्तिकर्तृत्वमपि व्याकरणस्य सिद्ध्यति ।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुत्या व्याकरणाध्ययनस्य नित्य-कर्मत्वं प्रतिपाद्यते। 'प्रधानं च षट्सु—अङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति'। व्याकरणाध्ययनस्यागमः खल्वपि प्रयोजनः=प्रवर्तकः। अत्र करणसाधनेन प्रयोजनशब्देनागमस्य सामानाधिकरण्यम्। भाष्यस्य प्रयोजनपदेन फलं प्रयोजकश्चोच्यते। अत्र फलपदेन वाक्यार्थावगमो विवक्षितः, व्याकरणशास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगि। एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयास्य नित्यकर्मत्वमित्यर्थः।

यैः किल वेदे आस्था नाधीयते, तेषामपि लघुनोपायेन शब्दज्ञानार्थं व्याकरणमावश्यकम्, शब्दानां प्रतिपदपाठः शब्दज्ञानेऽनभ्युपाय एव। तथा हि भाष्यम् - एवं हि श्रूयते—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम'। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्य-वर्षसहस्रमध्ययनकालः, न चान्तं जगाम' इत्यादि। एवं चाल्पायासेन शब्दौघज्ञानजनकत्वं व्याकरणत्वं सिद्धम्।

असन्देहपरिपालकत्वमपि व्याकरणस्य स्वरूपम्—भाष्यादवगम्यते। तथा हि याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तस्यां सन्देहः—स्थूला चासौ पृष्ती च, स्थूलानि वा पृषन्ति यस्याः सा स्थूलपृषतीति। तां नाऽवैयाकरणः स्वरतोऽध्यवस्यति, यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथान्तोदात्तत्वं ततस्तत्पुरुषः—इति'। अत्रासन्देहः=सन्देहाभावः, स च नात्यन्ताभावः, तस्य नित्यत्वात्, न चापि ध्वंसः तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाभावेन तदसम्भवात्, न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात्। यस्य त्वधीतव्याकरणस्यापि क्वचित्सन्देहः स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययविधानात्। अतोऽत्रासन्देहपदेन सन्देह-प्रागभावो विवक्षितः।

एतत्सर्वं 'व्याकरणस्य तटस्थलक्षणं प्रतिपाद्य' सूत्रं व्याकरणम्' इति तस्य स्वरूपलक्षणेऽनेका अनुपपत्तीः प्रदर्श्य 'लक्ष्यलक्षणे व्याकरणम्' इति वार्त्तिकव्याख्यानावसरे' लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। शब्दो लक्ष्यः सूत्रं लक्षणम्' इति भगवता भाष्यकारेण सिद्धान्तितम्।

अत्र व्याकरणशब्दो योगरूढ्या लक्ष्यलक्षणसमुदायपरः। अस्मिन् पक्षे करणत्वं समुदायस्यापि। अत एव शब्दानां प्रतिपत्तिर्भवति। समुदायावयवयोर्वैयाकरणानां मते भेदेन व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थोपपत्तिर्वृक्षस्य शाखेति वत्। भवे तद्धिते नास्ति सन्देहः। प्रोक्ततद्धितोऽपि समुदायस्यानन्यत्वान्नेतुं शक्य इति नास्ति कश्चित् सन्देहः।

---

# ब्रह्मप्राप्तिसाधकत्वरूपदार्शनिकस्वरूपनिरूपणम्

एतावता प्रबन्धेन शब्दसाधुत्वलक्षणं शब्दशास्त्रस्य स्वरूपं निरूप्य सम्प्रति प्राक् सङ्केतितं दार्शनिकं स्वरूपं निरूपयितुमुपक्रम्यते—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, (बृ० २।४।५)' य आत्माऽपहतपाप्मा, सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः' (छा० ८।७।१), 'आत्मेत्येवोपासीत' (बृ० १।४।७) 'आत्मानमेव लोकमुपासीत्' (बृ० १।४।१५) 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३।२।९) इत्यादि-श्रुतिभिः प्रत्यगात्मसाक्षात्कारस्यैव परमपुरुषार्थमोक्षसाधनत्वं समर्थितम् । तादृशसाक्षात्कारसाधकानि वेदान्तादीन्येव शास्त्राणि दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति, न तु पदसाधुत्वासाधुत्वसाधनेन शब्द-साक्षात्कारसाधकं शब्दशास्त्रं दर्शनशास्त्रपदव्यपदेश्यतामादधीत ।

अत्रेदं तात्पर्यम्—यद्यप्याकरग्रन्थेषु दर्शनशब्दप्रवृत्तिनिमित्तमधिकृत्य शास्त्रीयपद्धत्या न क्वचनापि विचारलेशो निभाल्यते, तथापि येषु शास्त्रपदवाच्येषु किं वस्तु, क आत्मा, किं तत्स्वरूपम्, कानि च तत्साधकानि प्रमाणानि, को मोक्षः ? इत्यादयोऽध्यात्मविषयाः प्राधान्येन प्रतिपादिताः स्युः, प्रसङ्ग-गोपात्तानां लौकिकानामपि विषयाणां विवेचने तात्पर्यं यदि तत्रैव पर्यवस्येत्, तान्येव दर्शनशास्त्रपदव्य-पदेश्यतां समुपयान्तीति पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा पर्यालोच्यते । नैवम्भूतं व्याकरणशास्त्रम्, केवलमत्र पदसाधुत्वासाधुत्वाख्यानमेव विजयतेतमामिति कथङ्कारमस्य दर्शनशास्त्रत्वमिति संशीतिः कदाचिद् विदुषामपि मनांसि समुद्वेजयेदित्यत्र व्याकरणाकरग्रन्थेषु निगूढानि प्रस्थानग्रन्थेषु प्रपञ्चितानि च दर्शनतत्वानि संक्षेपतः प्रदर्श्य दार्शनिकं व्याकरणस्वरूपं प्रदर्शयिष्यते ।

तपःस्वाध्यायसततनिरतैर्विगतकल्मषैः समाधिसमाहितस्वान्तैऋर्षिभिः स्वेन स्वेनार्षेण चक्षुषा स्वेस्वे निर्विकल्पके समाधौ सम्प्रति समुपलभ्यमानानां चेतनाचेतनभेदेन द्वैविध्यमाप्तानां पदार्थानां ग्राह्यग्राहकसर्वाकाररहितमपरिच्छिन्नं सर्वतः संहृतक्रमं यन्मूलतत्वं दृष्टमनुसंहितं च, यच्च तत्तन्मतानुयायिनां सर्वेषां प्राणिनां परमपुरुषार्थसाधनतयाऽभीप्सिततमम्, तदेव दर्शनम् । तत्प्रतिपादकानि शास्त्राण्यपि दर्शनाभिधानानि, 'शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेन, दृश्यते बोध्यतेऽपूर्वोऽर्थोऽनेन' इति विग्रहाभ्यां दर्शनशास्त्रपदयोः पर्यायवाचकत्वात् । एवं च दार्शनिकान्तरैरिव शाब्दिकशार्दूलैरपि शब्दतत्वं मूलतत्त्वरूपेण समाधौ साक्षात्कृतम्, तस्यैव च प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वाद् दर्शनशास्त्रत्वे न विप्रतिपद्येरन् मात्सर्यविधुरा विद्वांसः ।

अत्रेदमाकूतम्—'सदेव सोमेदमग्र आसीदेकमेवाद्वितीयम्, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्' इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वमात्मत्वं च यथा प्रतिपाद्यते, तथा 'वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते'। 'ओमित्येतदक्षरमिदं सर्वम्; ओमिति ब्रह्म 'इत्यादिश्रुतिभिः शब्दरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम्। 'तमेव भान्तमनुभाति सर्वं तस्य भाषा सर्वमिदं विभाति' इति श्रुत्याऽस्य स्वप्रकाशकत्वमपि प्रतिपाद्यते। हेलाराजोऽपि' इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा—योऽयं जातवेदाः, यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशस्तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च'। अभियुक्तोक्त्याऽनया शब्दतत्त्वस्य स्वप्रकाशकत्वं समर्थितवान्।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगिव स्थिते॥

(वा० १।५५)

इति प्रतिपादयन् हरिरप्यत्र परमानुकूलतां भजते यथा तेजसः=प्रदीपादेर्ग्राह्यत्वं ज्ञानविषयत्वम्, ग्राहकत्वं घटादिविषयकज्ञानजनकत्वं चेति द्वे ग्राह्यत्वग्राहकत्वरूपे शक्ती स्तः, तथैव सर्वशब्दानामेते ग्राह्यत्वग्राहकत्वशक्ती शक्तिशक्तिमतोरभेदाद् नित्यात्मभूते अपि भिन्ने इव स्थिते प्रतिभासमाने स्त इत्यर्थः। शब्दः स्वं प्रकाशयन्नेवार्थं प्रकाशयतीति कारिकाया निर्गलितोऽर्थः।

एतदेव शब्दतत्त्वं केनोपनिषदा 'अन्यदेव तद्विदितादथो अविदितादधि' (केनो० १।३) इत्यनेनात्मनो ब्रह्मत्वे प्रतिपादिते कथं न्वात्मा ब्रह्म ? आत्मा नामाधिकृतः कर्मण्युपासने च। संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वाऽऽसादयितुमिच्छति। तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा, लोकप्रत्ययविरोधात्। तार्किका अपि ईश्वरादन्यमात्मानमाचक्षते। मीमांसकाश्च - 'अमुं यजामुं यज' इत्यन्या एव देवता उपासते। तस्माद्युक्तं यद्विदितमुपास्यं तद् ब्रह्म भवेत् ततोऽन्य उपासक इत्यस्याविप्रतिपत्तेर्विपातनाय सिद्धान्तितया यच्चैतन्यमात्रसत्ताकमक्रमं शब्दतत्त्वं वाचा सक्रमया वर्णपदवाक्यरूपया नाभ्युद्यते, येन चाक्रमेण शब्दतत्त्वेन सक्रमा वागभ्युद्यते तद् ब्रह्म इदं यदनात्मभूतमुपाधिभेदविशिष्टमीश्वराद्युपास्यते। 'तन्न ब्रह्मेति विद्धि' इत्यर्थिकया 'यद्वाचाऽनाभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'। (केनोपनिषद् १।४) अनया श्रुत्या ब्रह्मपदेन प्रतिपादितम्।

'यः स्फोटम्=स्फोटाभिव्यञ्जकं वर्णं शृणोति, सुषुप्तौ इन्द्रियगणे विलीनेऽपि, शून्यम्=अज्ञानं पश्यतीति शून्यदृक्, सुप्तोत्थितस्य 'न किञ्चिदवेदिषम्' इति स्मरणं तदानीमज्ञानानुभवं साधयति, येनाक्रमेण प्रणवेन वाग् व्यज्यते; 'यस्य चात्मनः सकाशाद् हृदयाकाशे प्रत्यक्षम्, स परमात्मा' इत्यर्थकेन—

शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥

अनेन भागवतेनापि परमात्मपदेन तदेव वस्तु समर्थितम् ।

भगवती गीतापि—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (१८।६१) इत्यनेनेश्वरपदेन तदेव तत्त्वं प्रतिपादयति । तथा चोक्तं नागेशभट्टेन—'चतुर्विधा हि वागस्ति—परा, पश्यन्ती, मध्यमा, वैखरी च । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते । नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता (हृदयदेशे शब्दब्रह्मरूपा) मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद्द्वयं (परारूपं पश्यन्तीरूपञ्च) वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते । (परमल०म० स्फोटविचारः, पृ० ६८-६९) इति । एवं च व्यासनागेशयोरैक्यं स्पष्टमेव ।

सर्वग्राह्यग्राहकारवर्जिता अपरिच्छिन्ना सर्वतः संहृतक्रमा ब्रह्मापरपर्याया पश्यन्तीवाग् अविद्यालक्षणया अन्तःपश्यदवस्थया भोक्तृतारूपया विशिष्टं ज्ञेयरूपशून्यं चैतन्यमात्रं जीव इत्यभिधीयते । अनुमोदितश्चायमर्थो भागवतेन—

स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थाविष्ठः ॥
(११।१२।१७)

स एषः=अपरोक्षः, जीवयतीति जीवः परमेश्वरः अपरोक्षत्वे हेतुः—विवरेषु—आधारादिचक्रेषु प्रसूतिरिव, प्रसूतिरभिव्यक्तिर्यस्य सः, तामेवाभिव्यक्तिमाह—घोषेणेति । घोषेण पराख्येन नादवता प्राणेन सह, गुहामाधारचक्रं प्रविष्टः सन्, मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमा च मणिपूरचक्रे विशुद्धिचक्रे च उपेत्य=प्राप्य, वक्त्रे मात्रा=ह्रस्वादिः, स्वरः=उदात्तादिः, वर्णः=अकारादिः, इत्येवं वैखर्याख्यः स्थविष्ठः=अतिस्थूलो नानावेदशाखात्मको भवति । तथा च श्रुति :—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

निगमरूपोऽयं मन्त्रोऽनेकधा मुनिभिराचार्यैश्च व्याख्यायते। नामाख्यातोपसर्गनिपातेति भेदचतुष्टयमुपक्रम्य महाभाष्ये व्याख्यातः। पशुषु वाच एको भागः, पक्षिष्वेकः, सरीसृपेष्वेकः, तुरीयस्तु मनुष्येषु इत्यपि क्वचिद् व्याख्यायते। परं परापश्यन्तीत्यादिभेदचतुष्टयानुवादेन तु समनुगतार्थमिदं सुस्पष्टतया भवति 'तुरीयं वाचो मनुष्या वदन्ति' इति। एवं च सम्मुग्धज्ञानरूपया पश्यन्त्या स्फुटज्ञानरूपया च मध्यमया वैखरीवागियमर्थावबोधक्षमा भवतीति न कोऽप्यत्र विवादावसरः।

शाम्बपञ्चाशिकायामप्युक्तम्—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टि-
वर्णानन्तः प्रकटकरणे प्राणसङ्गात् प्रसूते।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां,
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥५॥ इति।

पश्यन्त्येव च वक्त्रकुहरं प्राप्ता कण्ठादिस्थानभागेषु विभक्ताकारादिवर्णरूपा वैखरा वागुच्यते। ततः सैव बाह्यार्थवासनयाऽविद्यारूपया क्रमेण घटपदाद्याकारैर्विकृता चक्षुरादिना गृह्यते। 'तिस्र एव वाचः' इति मतेनेदम् 'परावाक् चतुर्थी' इति मते तु परेव वाग् ब्रह्मरूपेति विवेकः।

इदमत्र रहस्यम्—कार्येषु कारणधर्मसमन्वयदर्शनाद् वैशेषिकैर्घटादिकार्यस्य पृथिवीत्वेन तत्कारणस्य परमाणोः पृथिवीत्वम्, सांख्यैश्च विकारग्रामेषु सुखादिसमन्वयदर्शनात् तत्कारणस्य प्रधानस्य सुखादिरूपत्वं यथाऽऽस्थीयते, तथैव घटादिषु पदार्थेषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वं शाब्दिकैः स्वीक्रियते। जात्यादीनां मिथो विशेष्यविशेषणभावानवगाहिजात्यादिस्वरूपावगाहि 'घटघटत्वे' इत्येवं रूपं निर्विकल्पकम्, 'गौः, शुक्लः, चलः, डित्थः' इत्यादि विशेष्यविशेषणभावावगाहि सविकल्पकं वा शब्दानुविद्धमेवेति सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयेनान्विता इति नास्ति सोऽर्थो यः कथञ्चित् कदाचित् क्वचिन्नामधेयेन वियुज्येतेति शब्दार्थयोस्तादात्म्यमभ्युपेयम्। अत एवार्थाः प्रतीयमाना नामधेयैरुपेताः स्वसामानाधिकरण्येनावगम्यन्ते गौरित्यर्थः, अश्व इत्यर्थं इति।

एवं च निर्विकल्पकं सविकल्पकं वा ज्ञानम् – 'गौः, शुक्लः, चलः, डित्थः' इति शब्दविशिष्टमेवार्थमवबोधयति। शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं पृष्ठश्च शब्देनैव दर्शयति, शब्दापरित्यागलब्धप्रकाशस्वरूपया वानुभूत्याऽनुभवतीति सोऽपि विशेष्यः शब्दरूप एवेति जानीहि। शब्द एवार्थोपारूढः प्रतिभातीति व्यवतिष्ठते। अथ च यदुपारूढः शब्दः प्रकाशते, तस्य पृथक् प्रदर्शयितुमनुभवितुं चाशक्यत्वाच्छब्द एव तथा प्रतिभाति। यथा चेन्द्रियजज्ञानेषु प्रक्रमः, तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः शब्दारूढो वार्थः प्रतिभातीति शब्दविवर्त एवायमर्थः, नान्यः कश्चित्। अतश्च शब्दब्रह्मेदमेकमविद्योपाधिदर्शितविचित्रमेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति सिद्धम्। तदुक्तम् हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।

(वा० प० १।१)

श्रुतिश्चाप्यमुमर्थमनुमोदते—

वागेव विश्वा भुवनानि जज्ञे नामैवेदं रूपत्वेन वव्रृते ।।

(वाक्य० १२१-टीका)

द्वे ब्राह्मणो वेदितव्ये शब्दब्रह्म परं च तत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।।

इति स्मृतिरप्यत्रानुकूला ! शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते । एतच्चौपनिषदममृतं शब्दब्रह्म शाब्दिकः समश्नुते । उक्तं च भगवता भाष्यकारेण—'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इति । तथा हि—व्यवस्थितसाधुत्वेन रूपेण शब्दतत्त्वे संक्रियमाणेऽपभ्रंशरूप-प्रतिबन्धकापगमे धर्मविशेष आविर्भवति । ततः शब्दब्रह्मतादात्म्योपगमरूपा ब्रह्मणः प्राप्तिर्भवति तथा चोक्तं हरिणा—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ।।

'इह द्वौ शब्दात्मानौ—कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिन्नाहङ्कारग्रन्थीन् अत्यन्तं संसृज्यत इति तदर्थ इति तद्व्याख्यातारः इति नागेशः ।

एवं च शब्दशास्त्रस्य ब्रह्मप्राप्तिसाधकत्वरूपं दार्शनिकं स्वरूपं सिद्धम् । शाब्दिकानां दार्शनिकत्वपक्षः स्फोटवादमेवावलम्बते । स्फोटस्य स्वरूपमवलम्ब्य समेऽपि दार्शनिकाः विवदन्ते । तस्य च विभिन्नं स्वरूपं विवृण्वन्ति । केचन च दार्शनिकाः स्फोटं प्रत्याचक्षते । अतः परमन्येषां दार्शनिकानां मतानि प्रदर्श्य शाब्दिकसम्मतं स्फोटस्वरूपं विवेचयिष्यते ।

---

# स्फोट-विमर्शः

नैयायिकनये परमाणोरिव, वेदान्तिमते ब्रह्मण इव च शाब्दिकसिद्धान्ते स्फोटस्य महती चर्चा विद्यते तत्र तत्राकरग्रन्थेषु । शाब्दिकानां दार्शनिकत्वप्रसादः स्फोटभित्तिमेवालम्बते । परन्तु स्फोटवादस्य कुतः प्रारम्भो जातः ? इत्यस्य समाधाने इतिवृत्तस्य पृष्ठानि मौनमेवावलम्बन्ते । परन्तु सूक्ष्मेक्षिकया पर्यालोच्यमाने 'वागेव विश्वा भुवनानि जज्ञे' 'ओमित्येतदक्षरमिदं सर्वम्' 'वाचो ह वाक्' इत्यादि श्रुतिरूपाणि स्फोटस्रोतांसि वेदब्राह्मणादिवारिधिषु समुपलभ्यन्ते । शाब्दिका अमुमेव सूत्रात्मकमर्थं सुगमतां सरलताञ्च नयन्ति । वेदब्राह्मणादिषु ग्रन्थेषु शब्दगोवागादिशब्दाः शब्दरूपेऽर्थे प्रयुज्यन्ते न तु स्फोटशब्दरूपेऽर्थे । अतो वादत्वेन स्फोटवादस्य कदा प्रारम्भ इति प्रश्नोऽद्यापि न समाहितोऽभूत् ।

'अवङ् स्फोटायनस्य[1]' इति सूत्रे स्फोटशब्दो दृष्टिगोचरीभवति । अस्य स्फोटायनशब्दस्य हरदत्तः पदमञ्जर्यां विवरणं करोति—'स्फोटोऽयनं पारायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकणाचार्यः[2] । नागेशेनापि स्फोटवादे अन्ते स्फोटायनऋषेरेव सिद्धान्तः स्फोटवाद इति प्रतिपादितम्·

वैयाकरण नागेशः स्फोटायन ऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः[3] ।।

यास्काचार्योऽपि प्रारम्भे निरुक्ते शब्दानित्यत्वं व्यवस्थापयतामाचार्यौदुम्बरायणानां मतं प्रत्याख्याय शब्दस्य नित्यत्वं व्यापकत्वमणुत्वञ्च स्थापितवान् । अत्र दुर्गाचार्यः—'व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च' इति स्फोटं प्रतिपादितवान् । एवं स्फोटस्येतिहासोऽतीव प्राचीनो वर्तते । अमुं स्फोटमुद्दिश्य विभिन्नशास्त्रेषु विभिन्नानि मतानि शास्त्रकाराणामुपलभ्यन्ते तान्यत्र समासतो निर्दिश्यन्ते—अत्र मीमांसकाः—'अथ[5] गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीयाः, इति भगवान् उपवर्षः इति

---

१—पा० सू० ६।१।१२३

२—पदमञ्जरी, काशिका, ६।१।१२३

३—स्फोटवादः, पृ० १०२, अड्यार लायब्रेरी, मद्रास, सीरीज नं० ५५, तथा वैयाकरण सिद्धान्त मंजूषा, पृ० ३०३, श्लो०—२

४—निरुक्त १-२

५—शाबरभाष्यम् १।१।५

कण्ठताल्वाद्यभिघातानां श्रवणेन्द्रियविषयाणां वर्णानामेव शब्दत्वं वाचकत्वं चास्ति। प्रकरणपञ्चिकायां शालिकोऽपि' कः शब्दोऽभिमतः ? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात्' इति। तथा च भाष्यम् श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः इति। अन्यस्मिन् दिनेऽनुभूतेऽद्यानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे—

'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यत्ति'[३] इति न्यायात् पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम्। सर्वदेशेषु तदुपलम्भाद् विभुत्वम्। लाघवाच्चैकत्वम्। आनुपूर्वीघटकम्—अव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञानविषयत्वम्। यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वं तद्वद् ज्ञानानामप्येतद् विषये स्थिरत्वम्।

ननु न तावद् वर्णानां प्रत्येकमर्थबोधकत्वम्, एकैकस्मादर्थप्रतीतेः। नापि समुदितानाम्, क्षणविनाशिनां समुदायानुपपत्तेः। प्रतिवर्णं च संस्कारकल्पने गौरवापत्तिः। अतो वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते। स एव पदात्मा शब्दः। एवं वाक्यस्फोटोऽपि। अप्रत्यक्षोऽप्ययमर्थः प्रतीतिलक्षणकार्यानुपपत्त्या गम्यते। न च वर्णा एवामुभूयन्ते न तदतिरिच्यमानस्वरूपं वस्तुतत्त्वमिति वाच्यम्, पदमेकं वाक्यमेकमिति चैकरूपस्यानुभवात्। न चेयं वर्णावगाहिनी, तेषां परस्परभिन्नत्वात्। न चैकत्र नानार्थकत्वे सम्भवतः, विरुद्धत्वात्। एकार्थविषयत्वेनैकत्वमिति चेत्, न, परस्पराश्रयात्। एकपदत्वेनैवैकार्थविषयत्वात्। तस्मान्न वर्णात्मकः शब्दः किन्तु स्फोटरूप एवेति चेन्न, वर्णातिरिक्तवाचककल्पनायामर्थापत्तिः प्रमाणं प्रत्यक्षं वा ? नाद्यः, अर्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वात्। नेतरः, तदभावात्। न चैकं पदमित्येकवस्त्ववगाहिनी नानावर्णेष्वनुपपद्यमाना बुद्धिरेव प्रमाणमिति वाच्यम्, वर्णेष्वप्येकार्थविषयत्वेन तदुपपत्तेः। अस्ति खल्वेकाभिधेयधीहेतुभावस्त्रयाणामपि वर्णानामेकस्मरणोपारूढानामश्मनामिवैकपिठरधारणे। नाप्यन्योन्याश्रयः, समधिगतैकाभिधेयधीहेतुभावानां तेषां पश्चात्पदत्वावधारणात्। कारकविशेषाभिधायी हि पदशब्दः। पद्यतेऽनेनेति स च कार्यसम्बन्धज्ञाने सत्येव भवति नान्यथा। अत एकार्थविषयत्वज्ञाने सत्येव—एकपदत्वज्ञानम्। यदाहुः—'अर्थैकत्वादेकं वाक्यम्' इति। पदमप्यर्थैकत्वादेकम्। श्रोत्रग्राह्ये च वस्तुनि शब्दशब्दः प्रसिद्धो वर्ण एव च श्रोत्रग्राह्यो न स्फोटः। अतो नासौ शब्दशब्दवाच्यः कथमर्थप्रत्यायकः स्यात्, शब्दादेवार्थप्रतीतेः सर्वलोकसम्मतत्वात्। आशुतरविनाशिनां साहित्यासम्भवात् 'कथं गमकत्वमिति चेत्, संस्कारेणेति। यदाह भाष्यकारः—

---

३—श्लोकवार्तिकम्—पृ० ८३३, श्लोक ३६६।

'पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः[1]' इति । व्यापारस्य चाव्यवधायकत्वात् शब्दादर्थं प्रतिपद्यामह इत्युपपद्यते । अथवा भाष्यपर्यालोचनया अन्त्यवर्णस्यैव प्रत्यायकत्वम् । एवञ्च शब्दादिष्वेकवचनमप्युपपन्नम् । तथा चोक्तम्—

यदि वा पूर्वसंस्कार इतिकर्त्तव्यतेष्यते ।

वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत् ॥[2]

केचित्तु—सद्रूपान्यवर्णविषयप्रत्यक्षं पूर्वेषु चातीतेषु वर्णेषु स्मृतिरूपेति चित्ररूपाबुद्धिः, सर्वार्थप्रतीतिहेतुरित्याहुः । तथा चोक्तम्—

चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् ।
केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥
अन्त्यवर्णेऽपि विज्ञाते पूर्वसंस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते[3] ॥

स्फोटवादिनापि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पनावश्यं कर्तव्या । ध्वनयो हि प्रत्येकं स्फोटमभिव्यञ्जन्ति साहित्यञ्च क्रमवर्तिनां संस्कारद्वारैवेति तुल्यं तत्कल्पनम् । प्रत्युत स्फोटवादिनां स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने निरवयवत्वमित्यधिका कल्पना स्यात् ।

तस्मात् वर्णा एव वाचकाः, न तदतिरिक्तः स्फोटो युक्तिसिद्ध इत्याहुः ।

गुरुमतानुयायिनस्तु वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतीत्युपपत्तये कश्चिद् विशेष आश्रयितुं युक्तः, सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य । उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात्, पूर्वपूर्ववर्णोपलम्भजन्यः संस्कार एवाश्रीयते । स च स्मृतिहेतोः संस्काराद्भिन्न एव । स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्र

---

१—शाबरभाष्यम्—१।१।५

२—श्लोकवार्तिकम्—१३०, पृ० ४७२, मद्रास यूनिवर्सिटी संस्कृत सीरीज, नं० १३ ।

३—श्लोक वार्तिकम् १११, ११२, पृ० ४६८, मद्रास यूनिवर्सिटी संस्कृत सीरीज नं० १३

क्षोपलम्भान्तरं जनयितुमलम्, नार्थान्तरमित्यर्थविषया प्रतीतिस्ततोऽनुपपन्नेति तदतिरेकिणः संस्कारस्याश्रयणम्'[1] इति संस्कारद्वयं स्वीकर्त्तव्यम्। एकः स्मृतिहेतुः, अर्थप्रतीतिहेतुरपरः। येन क्रमेण विषया अनुभूताः तेनैव क्रमेण स्मर्यन्त इति तु प्रमाणविरहितम्, एकैकशो दृष्टेष्वपि घटेषु 'सहस्रं घटाः' इति समुदितस्य स्मरणात्। तदित्थं वर्णाः एव शब्दः। ते च व्यापका नित्याश्च। सर्वोऽपि ककार एक एव। पदवाक्यानामपि वर्णसमुदायरूपत्वं प्रत्येकमेकत्वं नित्यत्वं विभुत्वञ्च। पदादीनामनित्यत्वे 'औत्पत्तिकस्तु शब्दः स्वार्थेन सम्बन्धः[2]' इति तत्सम्बन्धनित्यत्वप्रतिपादकं सूत्रं व्याकुप्येत। तथा चोक्तम्—

तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः।
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम्[3] ॥ इति ॥

शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धवेद्यत्वात् घटवदित्यनुमानेन चैषां वर्णानां द्रव्यत्वम्। शब्दो ध्वन्यात्मको वर्णात्मकश्च। वर्णव्यञ्जको ध्वनिर्वायुगुणः। वर्णस्तु द्रव्यम्, ध्वनिव्यङ्ग्यमित्याहुः। पातञ्जलयोगास्तु पदस्फोटस्य वाक्यस्फोटस्य च वाचकत्वं स्वीकुर्वन्तो वर्णानां वाचकत्वं प्रत्याचक्षते।

अयमभिसन्धिस्तेषामर्थप्रत्ययो हि वर्णनियतक्रमतया परस्परसम्भवद्भिरशक्यः कर्त्तुम्। न च संस्कारद्वाराऽऽग्नेयादीनामिव परमापूर्वे वा स्वर्गे वा जनयितव्येऽनियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामितिन साम्प्रतम्, विकल्पासहत्वात्। स खल्वयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुरन्यो वाऽऽग्नेयादिजन्य इवापूर्वाभिधानो न तावदनन्तरः, कल्पनागौरवापत्तेः। स एव तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवदिव वर्णानुभवैरेकस्य जन्यत्वं न सम्भवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम्। न चैष ज्ञापको हेत्वङ्गमज्ञातम्, तदङ्गं वानुभवतीति। न खलु सम्बन्धोऽर्थप्रत्यायनाङ्गमज्ञातोऽङ्गतामुपैति। स्मृतिफलप्रसवानुमितस्तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते अन्यथा यत्किञ्चिदेवैकमनुभूय सर्वः सर्वं जानीयादिति। न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति साम्प्रतम्, क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात्। न चैतत्स्मरणज्ञानं पूर्वानुभववर्तिनीं परापरतां गोचरयितुमर्हति। तस्माद् वर्णेभ्योऽसम्भवान्नार्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति। न चैष पदेऽपि प्रसङ्गः, तद्धि प्रत्येकमेव प्रयत्नभेदभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरणनिष्पन्नाः

---

१—प्रकरणपंजिका प्रमाणपारायण पृ० ८१, चौखम्बासीरीजि, १७

२—मीमांसासूत्रम्, १।१

३—श्लोकवार्तिकम्, १०८।७, श्लोक ३०५, चौखम्बा संस्कृतसीरीज—३।

संदृशाः सन्तोऽन्योन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन तत्तत्सादृश्यानां भेदात् तदुपधाना-
देकमप्यनवयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति। यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि
मणिकृपाणदर्पणादयो विभिन्नवर्णपरिणामसंस्थानमनेकमादर्शयन्ति न परमार्थतः। सादृश्योपधानभेदक-
ल्पिता भागा एव निर्भागस्य पदस्य वर्णाः, तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव-
सभागमिवाऽऽलम्बते। अतो गोपदस्फोटभेदस्यैकस्य गकारभागो गौरादिपदस्फोटसादृश्येन न निर्धारयति
स्वभागिनमित्योकारेण विशिष्टो निर्धारयत्येवमोकारोऽपि भागः शोचिरादिपदसदृशतया न शक्तो निर्धारयितुं
स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्धारयति। असद्भाविनामपि च संस्कारद्वारेणास्ति सद्भाव
इति विशेषणविशेष्यभावोपपत्तिरिति।

वेदान्तिनस्तु—वर्णानामेव वाचकत्वं स्वीकुर्वन्ति, तेषां मते स्फोटाभावात्। इदं तेषामभिप्रेतम्=
यदि वर्णानां वाचकत्वं न सम्भवेत्, स्फोटश्चानुभवपद्धतिमध्यासस्ते, तदैव वर्णातिरिक्तः स्फोटोऽभ्युपेयेत।
वर्णानामवाचकत्वं क्षणिकत्वेनाशक्यसंगतिग्रहत्वात् व्यस्तसमस्तप्रकारद्वयाभावाद्वा, वर्णानां क्षणिकत्वे
मानाभावेन प्रथमः कल्पस्तावन्निरस्तः। ननु वर्णानां प्रत्युच्चारमन्यत्वं सर्वजनप्रसिद्धमिति चेन्न, प्रत्यभि-
ज्ञायमानत्वात्। न चासत्यप्येकत्वे ज्वालादिवत् सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति साम्प्रतम्। सादृश्य-
निबन्धनत्वमस्य बलवद्बाधकोपनिपाताद्वा स्थीयते, क्वचिज्ज्वलादौ व्यभिचारदर्शनाद्वा। न चेदं प्रत्यभिज्ञानं
गत्वादिजातिविषयं न गादिव्यक्तिविषयम् तासां प्रतिनरं भेदोपलम्भात्। अत एव शब्दभेदोपलम्भाद् वक्तृभेद
उन्नीयते, सोमशर्माधीते न विष्णुशर्मेति युक्तम्। यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम्।
यथा कालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं
गकारादिषु भेदेन प्रथमानेष्वेव तत्त्वमेकं तदनुगतं चकास्ति, किं वा यथा गोत्वमजानत एकं भिन्नदेश-
परिणामसंस्थानव्यक्त्युपधानभेदाद् भिन्नदेशमिव वाल्यमिव महदिव दीर्घमिव वामनमिव तथा गव्यक्तिमजानतः
एकापि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथत इति भवन्त एवं विदाङ्कुर्वन्तु। तत्र गव्यक्तिभेदभङ्गीकृत्यापि
यो गत्वस्यैकस्य पदोपधानभेदकल्पनाप्रयासः, स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन। सत्यपि
समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्यः पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाःपद-
बुद्धिमारोक्ष्यन्ति। अतो जरा राजा कपिः पिक इत्यादौ पदविशेषप्रतिपक्षो नास्ति काचनापि विप्रतिपत्तिः।
वृद्धव्यवहारे चेमे वर्णाः क्रमादनुगृहीता गृहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहानन्तरं
समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो
लघीयसी कल्पना।

स्फोटवादिना तु दृष्टहानिरदृष्टकल्पना च कर्त्तव्या भवति ; वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात् । अतो वर्णा एव वाचका नित्या विभवश्चेति।

अत्रेदं विचारणीयम्-स्वसिद्धान्तभङ्गभिया वर्णानां नित्यत्वं सापेक्षमेव स्वीकार्यमिति । वस्तुतो वर्णानामनित्यत्वमेव, सृष्टिप्रलयमध्ये विनाशित्वाभावरूपमेव तत् । एवञ्च सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंस-प्रागभावादिकल्पनाया गले पतितत्वाल्लाघवं शशशृङ्गायमाणमेव । किञ्च गकारादिषु गत्वादिजातेरभावेन गकारादिज्ञानस्य निर्विकल्पकात्मकत्वेन त्प्रयक्षत्वानापत्तिः । ध्वनिगतगत्वादिभानस्वीकारे तु तदभाव-वतित त्प्रकारकज्ञानत्वेन भ्रमत्वापत्तिर्दुर्वारा । किञ्च गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्वस्वी-कर्तुस्तव गकारतो घकारादिभेदस्य स्वतः सिद्धतया स्फोटखण्डनाय प्रवृत्तेन त्वया वर्णकत्वरूप-मूलधनमप्यपहारितम् । तस्माद् ध्वनिभेदा एव वर्णाः, न तु ध्वन्यतिरिक्ता नित्याः । क्वचिद् भाष्ये—'वर्णा नित्याः' इत्युक्तिस्तु स्फोटपरा । वर्णानामनित्यत्वे च तत्र वाचकत्वस्य दुरुपपादतया तदतिरिक्तस्फोटकल्पना वेदान्तिनाऽपि स्वीकार्या ।

वैयाकरणनये तु स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनिगतधर्माणामध्यस्तत्वाद् ब्रह्मणि प्रपञ्चाध्यासे भिन्नभिन्नरूपेण तत्प्रतीतिरिव वर्णभेदप्रतीतिर्नानुपपन्ना । न च त्वन्मतेऽपि स्फोटस्य ब्रह्मत्वेन निर्धर्मकतया तत्र गत्वादिप्रकारकप्रतीते भ्रमत्वं दुर्वारमेवेति वाच्यम्? तुरीयदशायां भ्रमत्वेऽपि तव ब्रह्मण एव प्रपञ्चरूपेणं प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्यत्वात् । एवञ्च मीमांसकादीनां स्फोटवादखण्डनं शाब्दिकनयानवगमविजृम्भणमात्रम् ।

सांख्यास्तु—प्रत्येकवर्णाऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकं पदं स्फोट इति योगैरभ्युपगम्यते, कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव । 'स च शब्दविशेषः—पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते । स शब्दोऽप्रामाणिकः । कुतः? प्रतीत्यप्रतीतिभ्याम् । स स्फोटाख्यः शब्दः किं प्रतीयते, न वा? आद्ये येन वर्णसमुदायेनानुपूर्वीविशिष्टेन सोऽभिव्यज्यते तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन । अन्त्ये त्वज्ञातस्य स्फोटस्य नार्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पना । 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात् वर्णनित्यत्वं न युक्तम्, 'उत्पन्नो गकारः' इत्यादि प्रत्ययेनानित्यत्वसिद्धेः । प्रत्यभिज्ञा च तज्जातीयताविषयिणी । अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तिरित्याहुः ।

नैयायिकास्तु—पदानामेव वाचकत्वम्, वर्णानां समूहः पदम्, पदानां समूहो वाक्यम् । वर्णाश्चा-नित्याः । ननु वर्णानामनित्यत्वे 'सोऽयं ककारः' इति प्रत्यभिज्ञाया उपपत्तिर्न स्यादिति चेन्न, सोऽयं धान्यराशिरितिवत् जातिनिबन्धना, सादृश्यनिबन्धना वा प्रत्यभिज्ञेति वक्तुं शक्यत्वेनादोषात् । ननु तथापि क्रमोत्पन्नविनष्टानां वर्णानां सहभावाभावात् तत्समूहस्य पदस्य, पदसमूहस्य वाक्यस्य च विलया-पत्तिरिति चेन्न, संस्कारद्वारा तदुपपादयितुं शक्यत्वात् । यथा क्रमोत्पन्ना अपि प्रत्येकग्रासाः समुदितास्तृप्ति-मुत्पादयन्ति, तथा क्रमवर्तिनोऽपि वर्णाः समुदिता एवार्थभिधायिनो भवन्ति । न तावदनुमानमहिम्ना स्फोटस्वरूपमुपपादयितुं पार्यते, परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणेनार्थप्रतीतेर्घटमानत्वात् । नापि प्रत्यक्षतः, वर्णानामेव प्रत्यक्षत्वादित्याहुः ।

वैयाकरणास्तु—स्फोट एव वाचको न तु वर्णाः, स्फोटानुभवानन्तरं विदितसंगतेरर्थधीसमुत्पादात् । न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति, गौरित्येकं पदं गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सार्वजनीनत्वात् । न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम् । नाप्यौपाधिकः । उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधी हेतुता वा ? न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति । तथा सति धवखदिरपलाशा इति न जातु स्यात् । नाप्येकार्थधीहेतुता तद्धेतुत्वस्य वर्णेषु व्यासेधात् । तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः—साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति । तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते, स स्फोट इति । ते च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागेव विशदयन्ति येन द्रागर्थधीः स्यात् । अपि तु रत्नतत्त्वज्ञानवद् यथास्वं द्वित्रिचतुष्पञ्चषड्-दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वं भिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम् । नापि प्राचां, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात् । अन्त्यस्य चेतसः केवलस्याजनकत्वात् । न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम्, व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात् स्फोटज्ञानस्य च प्रत्यक्षत्वात्, अर्थधियस्तत्र प्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न पुनरस्फुट इति न समः समाधिः । तस्मान्नित्यः स्फोट एव वाचको न वर्णाः । अस्य च स्फोटस्योपाधिभेदादष्टौ भेदाः वर्णपदवाक्यरूपरुषितस्य भानाद् वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटश्चेति त्रयः, अत्रैव जातिव्यक्तिभेदेन वर्णजातिस्फोटः, पदजातिस्फोटः; वाक्यजातिस्फोट इति त्रयः । पदवाक्ययोः सखण्डाखण्डत्वभेदात् सखण्डपदस्फोटः,सखण्डवाक्यस्फोटश्चेति द्वौ एवं संकलनयाऽष्टौ स्फोटा इति नागेशादयः ।

श्रीरामाज्ञापाण्डेयास्तु:—व्याकरणदर्शनभूमिकायां षोडश स्फोटानाहुः । तथाहि—अस्यां स्थितौ वाक्यार्थज्ञानामस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात् । नापि 'पचति' इत्यादौ पदस्फोटव्यवहारः । तथा चायं विभागो नहि युक्तियुक्तः । अत एव नागेशभट्टो नहि अष्टौ स्फोटान् मञ्जूषायां निरदिक्षत् किन्तु केवलमान्तरबाह्यभेदेन द्वौ स्फोटौ प्रदर्श्य बाह्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत् । तथा च व्यवहारदृष्ट्या बाह्यस्फोटप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरेवास्माभिरेव लम्बनीया । तथाहि - व्यक्तिः पदार्थ इति व्याडिमते व्यक्तिस्फोटः । जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोटः इत्येवं रूपेण द्वौ स्फोटावभ्युपगन्तव्यौ । यदि चावान्तरस्फोटप्रतिपादने आग्रहस्तर्हि कल्पितानि पदानि कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः । एवं सति –(१) प्रकृतिस्फोटः (२) प्रत्ययस्फोटः (३) प्रकृतिजातिस्फोटः (४) प्रत्ययजातिस्फोटः (५) पदस्फोटः (६) पदजातिस्फोटः (७) वाक्यस्फोटः (८) वाक्यजातिस्फोटः (९) अखण्डपदस्फोटः (१०) अखण्डपदजातिस्फोटः (११) अखण्डवाक्यस्फोटः

(१२) अखण्डवाक्यजातिस्फोट इति द्वादश स्फोटा भविष्यन्ति । तत्तदवयवविवक्षाविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाकल्पनाभ्यां सर्वेषां कृते एते द्वादश स्फोटाः युक्तियुक्ता भवेयुः एतदेव विचार्य मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयत् ।

. . . . . .

यच्च भट्टनागेशो लघुमञ्जूषायाम् 'तत्र' प्रकृति[1]प्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनात्' इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवं रूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः' इत्याद्यवोचत्, तद्वक्ष्यमाणभाष्यविरोधाद्धेयमेव ।

वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते, प्रत्याहाराह्निके 'ऐ औ च्' सूत्रोपरि 'अथवोभयतः स्फोटमात्रं निर्दिश्यते' इति भाष्योक्त्या शुद्धेषु ऋकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात् । तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटावधिकौ तत्र सन्निवेश्याविति चतुर्दशस्फोटाः सम्पन्नाः । प्रकृतिप्रत्ययविषयेऽपि अखण्डखण्डभेदेन द्वयोरपरयोरपि सम्मेलने षोडशस्फोटाः सम्पद्यन्ते । एते सर्वेऽपि स्फोटा मन्तव्याः स्फोटं विहाय पदवाक्यकल्पनायाः खपुष्पायमाणत्वात् । यद्यपि सूत्रे वार्तिके भाष्ये वा सृष्टिक्रमो नोक्तस्तथापि श्रुतिप्रामाण्यात् सोऽभ्युपगम्यते इत्याहुः ।

. . . . . .

एवञ्च स्फोटस्येतिहासः परमप्राचीनः सन्नपि वादस्यास्य स्फोटशब्देनाभिधाने किं विनिगमकमासीदिति, जिज्ञासा पुनः पुनरुदेतीति तत्र किञ्चिन्निवेद्यते :–

शतपथब्राह्मणे सर्गनिरूपणप्रसङ्ग उपाचरितम् 'असद् वा एतदग्र आसीत्', स च ऋषिः । ऋषिश्च प्राणा 'अभूवन्'[2] 'सतो बन्धुमसति निर्विन्दन'[3] । मैत्रायण्याय –उक्तम् –'प्राणा वै सप्त ऋषयः[4] ऐतरेये च 'प्राणा वै ऋषयो दैव्यासः । मध्यस्था इमे प्राणाः'[5] । शतपथे 'इन्द्र' इत्यभिहिताः 'योऽयं मध्ये प्राणः एष एव इन्द्रः[6]' त एव तप्ताः फलतश्च तैः प्रतिव्यक्ति भिन्नाः सप्त पुरुषाः सृष्टाः[7] । एभ्य एव चान्ततः प्रजापतिराविर्बभूव[8] । प्रजापतिरेष बहुरूपो भवितुं तपस्तेपे—तपोऽतप्यत । तप आचरता तेन

---

१—लघुमञ्जूषा, पृ० ४५७ ।

२—श० ब्रा० ६।१।१।१

३—ऋ० १०।१२६।४

४—मैत्रा० १।५।११

५—ऐत० २।२।२७

६—श० ब्रा० ६।१।१।२

७—श० ब्रा० ६।१।१।२

८—श० ब्रा० ६।१।१।३६

प्रजापतिना सर्गादौ 'ब्रह्म त्रैविधा' आविर्भाविता। परं ततस्तेन वागधिष्ठानाद् आप आविष्कृताः —'सोऽथो-ऽसृजत।' वाच एव लोकात्।[1]

प्रजापतिश्च त्रैविद्यासहितः अपः प्राविशत्। तद् इयम् 'अखण्डत्वमापेदे' सोऽनया त्रय्यया विद्यया सहायः प्राविशत्। तत आण्डं समवर्तत[2]। ततो ब्रह्मैव प्रथममसृज्यत। त्रयी एव विद्या—'तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजम्[3] इति पश्चात् तदण्डं प्रास्फुटत्, ततश्च सृष्टिरियं कृत्स्ना प्राभवत्[4]। एतत्सर्वमधिशतपथं प्रावर्णि।

माध्यन्दिनेऽपि व्याहृतम्—'सुपर्णोऽपि गरुलांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षां। स्तोम आत्मा, छन्दांसि अङ्गानि, यजूंषि नाम। साम ते तनूर्वाङ्देव्यम। यज्ञां यज्ञं पुच्छं धिष्ण्या शफाः[5] एवमेव—तैत्तिरीये[6] काठके[7] मैत्रायण्याम्[8] अपि द्रष्टव्यम्। आहुश्च बाह्वृचाः—'विसुपर्णो अन्तरिक्षाण्य-ख्यत्'[9]।

अत्रेदं ध्यातव्यम्

मन्त्रोऽयं सौपर्णाग्निचयने विनियुक्तः। चयनेऽत्र प्राणभूतेष्टिका देहा-आधीयन्ते, तदा शाट्याय-निनोक्तम्-सुपर्णस्यास्य पक्षयोर्यदा स्फोटो जातस्तदा श्रवणगोचरतां गतः—'अपि ह स्माह - शाट्यायनिः। स्फोटतो हैकः पक्षयोरुपशुश्राव'[10]।

इमे हि प्राणभृदिष्टिकागता; प्राणा एव पूर्वदेव (मिथक) कथायाम् ऋषय आसन्। नैतज्जातुचि-दपि विस्मर्तव्यं च यत् प्राणानामेव प्रतिमास्वरूपः पुरुषः प्रजापतिः सुपर्णः, इदमीयमेव सर्वविद्यामयरूपं तत्तदुक्तर्चेषु स्फुटमुक्तम्।

---

१—श० ब्रा० ६।१।१।६

२—श० ब्रा० ६।१।१।१०

३—श० ब्रा० ६।१।१।१०

४—श० ब्रा० ६।१।१।२, ६।१।१।३

५—मा० १२।४

६—तै० ३।१।१०

७—काठ० १६।८

८—मैत्रा० २।७।८

९—ऋ० १।३५।७

१०—श० ब्रा० ८।१।४।६

एष सर्वविद्यावपुः स्फोट एव वैयाकरणः स्फोट इति शाब्दिकसमयः। आतश्च—'वाण्येव सौपर्णीत्यपराख्यां भजते[1]।'

किञ्च प्रजापतिः पुरुषश्च सुपर्ण-एव—

'प्रजापतिर्वै सुपर्णः[2], पुरुषः सुपर्णः[3]'।

'यो ह्येव सविता स प्रजापतिः[4]'।

अन्यत्रापि गोपथे पूर्वभागे[5], तैत्तरीयेऽपि 'प्रजापतिः सविता भूत्वा प्रजा असृजत[6] इति।

एवञ्च—अयमेव वैदिकः स्फोटः स्फोटायन ऋषिणा सिद्धान्तत्वेनाङ्गीकृतः। स च सिद्धान्तस्तूत्तरकालिकैश्शाब्दिकैः सृष्टिप्रलयादिमूलकारणत्वेन स्वीकृतः। एवञ्च स्फुटत्यर्थो यस्मादसौ स्फोट इत्यन्वयर्थनामधेयता स्फोटस्य। तदनु स एव स्फोटः नागेशभट्टेन परिष्कृतः परिबृंहितश्चेत्यलमतिविस्तरेण।

---

१—श० ब्रा० ३।६।२।२

२— ,, १०।२।२।४, ऋ० १०।१४६।३

३— ,, ७।४।२।५

४— ,, १२।३।५।१

५— गो० ५।२२

६—तै० ब्रा० १।६।४।१

---

# व्याकरणशास्त्रस्य मुख्यमुद्देश्यं शब्दसाधुत्वान्वाख्यानम्

उपर्युक्तेनैतावता महता प्रबन्धेन शाब्दिकानां विमलमतिप्रकाशक उर्वरमस्तिष्कप्रादुर्भूतः शब्दशास्त्रस्य दार्शनिकसिद्धान्तपक्षः समासेन निरूपितः। परं संस्कृतसाहित्ये वैयाकरणानां यशोध्वजः वेदान्तादिविदां विदुषाणामिव नमस्तले नोद्धूयते। विमलशेमुषीमन्तस्तत्त्वगवेषकाः शब्दानुशासनविषय एव शाब्दिकान् आद्रियन्ते ।

विश्वविश्रुतैर्दार्शनिकैः स्वसिद्धान्तानुगुणश्रुत्यर्थविचारावसरेऽर्थसङ्गमनाय व्याकरणसूत्राण्येवानुकूल्यन्ते। तत्र तत्र ते प्रतिपादयन्ति यत्-एवं श्रुतीनामर्थकरणे तेन तेन सूत्रेण विरोधः उत्पद्यतेऽतोऽत्रैवमेवार्थः कर्त्तव्यः। अर्थात् व्याकरणसूत्रं यथा न विरुद्धेय तथैवाचार्याः श्रुतीनामर्थं प्रतिपादयन्ति। अतएव 'कर्त्तृकर्मव्यपदेशाच्च'[1] इति सूत्रार्थविचारावसरे 'मनोमयः प्राणशरीरः' इति वाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे - 'उतमितः प्रेत्याभिसम्भवितास्मि' इति प्राप्तिकर्मत्वकर्तृत्वव्यपदेशो विरुद्धः —इति भगवता व्यासेन निर्णीतं कथं सङ्गच्छताम् — इत्याशङ्क्य जीवस्यैव ज्ञेयत्वे प्राप्तिकर्मत्वमपि वाच्यम्, कर्त्तृसंज्ञया कर्मसंज्ञाया बाधात्। एवञ्च एतमिति द्वितीया न स्यात्। कर्मकर्तृतायां च यगाद्यापत्तिः- इति शब्दविरोधद्वारा भवति सभेदहेतुः इत्यादि कौण्डभट्टेन प्रतिपादितम्।

अत्रायं सन्दर्भार्थः - किमिह मनोमयत्वादिधर्मः जीव एवोपास्यत्वेनोपदिश्यते - आहोस्वित् परं ब्रह्म ? इति जीवस्य मन आदिभिः सम्बन्धः प्रसिद्धः, न तु ब्रह्मणः, इति। जीव एवोपास्य इति पूर्वपक्षे उत्तरसूत्रम्—'अनुपपत्तेस्तु न शरीरः' इति तद्वाक्योक्तसत्यसङ्कल्पादिगुणानां जीवेऽनुपपत्तेर्न जीव उपास्यः किन्तु ब्रह्मैव। अत्र मनोमयः प्राणशरीरः इत्यादिषु द्वितीयार्थे प्रथमा। एवञ्च मनोमयत्वादिगुणविशिष्टं हृदये ध्यात्वा-एतम्=मनोमयत्वादिगुणाविशिष्टम्। अभिसम्भवितास्मि=प्राप्तास्मि। प्राप्त्यर्थकात्मनेपदिनो भवतेर्व्यत्ययेन परस्मैपदम्। एवञ्च - 'एतम्' - इत्यनेन जीवः कर्मत्वेनोच्यते। अभिसम्भवितास्ति- इति तिङंास एव कर्तृत्वेनोच्यते। न च सत्यं गतौ - एकस्य कर्तृकर्मव्यवहारो युक्तः। कर्तृकर्मव्यपदेशाच्च न मनोमयत्वादिगुणविशिष्टो जीवः इत्याह - मनोमय इति। मनोमयस्य =मनोमयपदस्य जीवत्वे =जीवपरत्वे वाक्यशेषे=मनोमयः प्राणशरीर इत्यादिपदसमुदायात्मकवाक्यस्यान्ते। तस्य=जीवस्य। कर्तृकर्म-

1—ब्र० सू० १।२।४

व्यपदेश इत्यर्थः इत्थमन्वयः। इतीति इसि वाक्यबोधितकर्तृकर्मव्यपदेश इत्यर्थः। विरुद्ध इति युगपज्जीवस्य कर्मत्वकर्तृत्वव्यपदेशो विरुद्ध इत्यर्थः। एतेन समयभेदेन संज्ञाद्वये न विरोध इत्यपास्तम्। तथा च जीव एवोपासकः जीव एवोपास्यश्चेत्येकस्य कर्त्तृत्व कर्मत्वञ्च विरुद्धमापद्येतेति भाष्योक्तिविरोध इति। कथमिति - शाब्दिकनये कर्तृत्वकर्मत्वयोर्विवक्षिक्तयैकस्मिन् वस्तुनि एककालेऽपि तयोः सत्त्वे विरोधाभावात् - इति तत्त्वम्।

एकस्मिन् कर्तृत्वकर्मत्वयोः सत्त्वे विरोधाभिप्रायकं न शङ्करभाष्यम्, किन्तु युगपत्संज्ञाद्वयविरोधपरं तत्दित्याशयेन समाधानम्। ज्ञेयत्वे = उपास्यत्वेन ज्ञानविषयत्वे। प्राप्तिकर्मत्वमिति = उपास्यत्वेन ज्ञानविषयस्य प्राप्तिकर्मत्वादिति भावः।

आख्यातेनेति—अभिसंभवितास्मि-इत्येतद्घटकाख्यातेनेत्यर्थः। बाधादिति-कर्त्तृकर्मसंज्ञयोराकडारीयत्वेन 'आकडारादेका संज्ञा।'[1] इत्युक्ते परत्वादिति तात्पर्यम्। तथा च = परत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधे च' कर्मकर्त्तृतायामिति - 'एवं ध्यात्वा ध्यायेद् वा' इत्यत्र कर्मत्वेन निर्दिष्टस्य 'एषोऽहमभिसंभावितास्मि' इत्यत्र कर्तृत्वविवक्षया न युगपद् विषयकबाध्यबाधकभाव इति तात्पर्यम्। यगाद्यापत्तिरिति - अभ्युपगमवादेन वादिबलनिरीक्षणार्थं निर्दिष्टस्य स्वकरणवादेन इयमुक्तिः, यगादेः तासिना बाधात्। प्राप्ये कर्मणि कर्मवद्भावाभावाच्च। तथा च कर्मकर्तृतायामपि भाष्यविरोध एव दोषो द्रष्टव्यः। शब्दविरोधद्वारा संज्ञाद्वयप्रयुक्तकर्मार्थकतिङ्कर्मार्थिकद्वितीयारूपशब्दविरोधद्वारा। सः = कर्मकर्तृव्यपदेशः। भेदहेतुः = उपास्योपासकयोः कर्मकर्त्रोर्भिन्नत्वे कारणम्। एकदा संज्ञाद्वयाभावे विभक्तिद्वयाभावेनदर्शनं विरुद्ध्येतेति।

एवञ्च—एतेन सन्दर्भेण स्पष्टं प्रतीयते यद् दार्शनिकैर्दर्शनशास्त्रसर्वस्वभूते जीवब्रह्मविचारेऽपि शब्दशास्त्रीया प्रक्रियोपयुज्यते, न तु व्याकरणशास्त्रपरिशीलितदर्शनपद्धतिः।

एवं 'पचति भवति' इति प्रयोगविचारावसरे भगवता पतञ्जलिना प्रतिपादितम् 'का तर्हीयं वाचो युक्तिः' पचति भवति' 'त्वं पचसि भवति, 'पक्ष्यति भवति' इति। सैषा वाचो युक्तिः—पच्यादिक्रिया भवतिक्रियाया कर्त्र्यो भवन्ति इत्युक्तम्। अत्र पचति भवति 'इत्यस्य पाककर्तृका भवनक्रिया, त्वं पचसि भवति, इत्यस्य त्वदभिन्नाश्रनिष्ठपाकाभिन्नाश्रयिकाभवनक्रिया, पक्ष्यति भवति - इत्यस्य भविष्यत्कालिकपाकाभिन्नाश्रयिका भवनक्रिया इति बोधः। प्रथमान्तार्थस्य मुख्यत्वे तु उक्तबोधासिद्धिः 'त्वं पचसि भवति' इत्यत्र 'भवति' इत्यस्यापत्तिश्च। युष्मदर्थस्यैव प्राधान्येन भवतिक्रियायाः कर्तृत्वापत्तेः। धात्वर्थविशेष्यकत्वे तु पाकक्रियाया एव प्राधान्यात् - भवति इति प्रथमपुरुषोपपत्तिः। पक्ष्यति भवति, इत्यादौ तु भविष्यन्ती पाकक्रिया सूक्ष्मरूपेण भवति इत्यर्थेन भविष्यत्कालिकपाकक्रियाया वर्तमानकालिक भवनक्रियायाः कर्तृत्वासम्भवदोषो नापादनीयः।

१—पा० सू० १।४।१

शाब्दिकनये बौद्धभविष्यत्पाकक्रियायास्तदानीमपि सत्त्वेन दोषलेशो न स्याच्च ।

एवञ्च भाष्येणानेनापि स्पष्टं प्रक्रियायामेव शाब्दिकानां पक्षपातः ।

अत एव व्याकरणशास्त्रारम्भप्रयोजनप्रतिज्ञायां शब्दशास्त्रे प्रमाणभूत आचार्यो भगवान् पतञ्जलिः 'अथ शब्दानुशासनम्' इति प्रतिज्ञासूत्रमुपन्यस्य शब्दानुशासनमेव व्याकरणस्य शब्दज्ञानरूपप्रयोजनं प्रतिपादयन् 'लौकिकानां वैदिकानाञ्च शब्दानामन्वाख्यानमेवाह'—अथ गौरित्यत्र[1] कः शब्दः' इत्यादिसन्दर्भेण । अग्रे च 'कानि पुनः शब्दानुशानस्य[2] प्रयोजनानि' इत्युपन्यस्य' 'रक्षोहागमलध्वसन्देहाःप्रयोजनम्'[3] इति प्रयोजनमाह, न तु ब्रह्मज्ञानं प्रयोजनमित्याह । यद्यप्येतद्भाष्याद् ब्रह्मज्ञानमेव फलं सम्पद्येत तथापि न हि तत् साक्षात्प्रयोजनमपितु परम्परया प्रयोजनम् । पुनश्च-ऊहस्य प्रयोजनप्रतिपादनावसरे 'न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम्[4] ।

अस्यायमर्थः—यस्मिन्यागे - इतिकर्तव्यतोपदिष्टा सा यागान्तरेणोपजीव्यते प्रकृतिः । येनं चोपजीव्येत सा विकृतिः । प्रकृतिवद्विकृतिः कर्तव्या 'इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग् विजानाति । तत्राग्नेर्मन्त्रोऽस्ति 'अग्नये त्वा जुष्टं निर्वपामि' इति तत्र 'सौर्यं चरुं निर्वपेत ब्रह्मवर्चस्कामः' इति सौर्ये चरौ मन्त्र ऊह्यते - सूर्याय त्वा जुष्टं निर्वपामि' इति । एतेन तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुमिति वाक्येन पदान्वाख्यानस्यैव प्राधान्यं समर्थितं भवति । अपेक्षितविपरिणामन्तरा क्रियायां वैगुण्ये न लक्ष्यसिद्धिः प्रतिपादिता भगवता भाष्यकारेण । तत्र विपरिणामेनैव चेष्टसिद्धिः समर्थिता, न तु तत्त्वज्ञानचर्चया ।

भगवता व्यासेनाप्युक्तम्—

वेदार्थज्ञो जपं जप्त्वा, तथा वाध्ययनं द्विजः ।

कुर्वन् स्वर्गमवाप्नोति, नरकं तु विपर्यये[5] ।।

---

१—म० भा० वा० पृ० ८

२— ,, ,, पृ० १६

३— ,, ,, पृ० १७

४—म० भा०, वा० पृ० १८

५— ,, ,, पृ० २०

अत्र जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम्। ज्ञा धातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रिय-संयोगसम्पादनादिरूपो व्यापारोऽर्थः, तस्यैवात्र विधेयत्वम्। 'षडङ्गेषु प्रधानं व्याकरणम्' इत्यस्य वेदार्थज्ञाने प्रकृतिप्रत्ययनिर्वचनद्वारा व्याकरणं प्रधानं कारणम्। भाष्ये फलवान्—इत्यत्र फलपदेन वाक्यार्थावगमो विवक्षितः। तथा च शब्दशास्त्रं पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगि, तद्द्वारा चाभीप्सितफलसिद्धिः। अत एव व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतया व्याकरणाध्ययनस्य नित्यविधित्वं प्रतिपादितमाचार्यैः।

पुनश्च 'लघ्वर्थं चाध्येयं व्याकरणम्'[1]।

इत्यनेन लाघवेन शब्दज्ञानं व्याकरणस्य प्रयोजनं प्रतिपादितम्।

'असन्देहार्थं चाप्यध्येयं[2] व्याकरणम्'

इत्युपक्रम्य 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इत्यत्र स्थूला चासौ पृषती च, स्थूलानि वा पृषन्ति यस्याः सेयं स्थूलपृषतीतीत्यत्रावैयाकरणः स्वरतो न निश्चिनोति; पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं वा। वैयाकरणस्तु यदि पूर्वपदप्रकृतिस्वरत्वं तदा बहुव्रीहि, समासान्तोदात्तत्वं तदा तत्पुरुषः। इत्यत्रापि प्रक्रियैव व्याकरणस्य प्रयोजनं प्रतिपादितम्। सन्देहस्य प्रागभावोऽत्र द्रष्टव्यो न तु प्रध्वंसाभावः। नहि वैयाकरणस्य संदेह उत्पद्य विनश्यति। अयमत्र निष्कर्षः—असन्देहः सन्देहाभावः। स च नात्यन्ताभावः, तस्य नित्यत्वात्। न च ध्वंसः तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाभावेन तदसम्भवात्। यस्य तु अधीतव्याकरणस्यापि क्वचित्सन्देहः स पदविषयकवैयाकरणत्वाभाववानेव। वेदनार्थे हि तत्र प्रत्ययः। अतः—असन्देह इत्यत्र प्रागभाव एव। तत्परिपालनञ्च शास्त्राध्ययनफलम्, न तु स्वरूपम्, तस्याजन्यत्वात्। तत्पालनञ्च प्रतियोगिजनककारणविध्वंसनम्। प्रागभावस्य प्रतियोगिजन्मनाश्यत्वादिति।

'तेऽसुराः हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छनमपशब्दोच्चारणम्। केऽपशब्दाः के च सुशब्दाः—इत्यपि प्रक्रियाधीनमेव।

दुष्टः शब्दः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रं यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्[3]॥

इन्द्रस्य—अभिचारो वृत्रेणारब्धः। तत्र इन्द्रशत्रुर्वर्धस्व इति मन्त्र ऊहितः। तत्रेन्द्रस्य शातयिता शमयिता वा भव इति धिया शब्दोऽत्र शत्रुशब्दः आश्रितो न तु रूढिशब्दः।

---

१—म० भा० वा० पृ० २०

२—म० भा० वा० पृ० २१

३—म० भा० वा० पृ० २३

रूढिशब्दाश्रयणे तु बहुव्रीहितत्पुरुषयोरर्थभेदः । एवञ्च इन्द्रामित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भवेत्यर्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये—आद्युदात्तः ऋत्विजा प्रयुक्तः—इत्यर्थान्तराभिधानात् इन्द्र एव वृत्रस्य शातयिता सम्पन्नः। इन्द्रशत्रुत्वस्य च विधेयत्वात् सम्बोधनविभक्तेरनुवाद्यविषयत्वात्—इहाभावः। अमेदमिति वृत्तम्—पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्र चेन्द्रस्य शातयिता शत्रुः हिंसक इति यावत्। तथाभूतः सन् वर्धस्वेति प्रतिपादितुमिन्द्रशत्रुर्वर्धस्वेति प्रयुक्तम् । ण्यन्ताच्छशरौणादिकः क्रुन्प्रत्ययः। प्रज्ञादिगणे निपातनाद्ध्रस्वः। इन्द्रशत्रुत्वस्य विधेयत्वान्न सम्बोधनविभक्तिः, तस्या अनुवाद्य-विषयकत्वात्। अत एव राजन् युध्यस्व राजा भव युध्यस्वेत्पनयोर्व्यवस्थयैव प्रयोगः। राजत्वस्य सिद्धत्वे सम्बोधनविभक्तिर्न तु विधेयत्वे । एवं स्थिते—इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः। तथा च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः। इन्देर्हि धातोरौणादिके रन्प्रत्यये कृते इन्द्रशब्द आद्युदात्तो व्युत्पादितः। तेनेन्द्र एवास्य हि शमः सम्पन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धम्। तदिहोदाहरणतयोक्तम्।

स्यादेतत् यज्ञकर्मणि ह्येकश्रुत्येह भवितव्यम्। सा च तत्पुरुषबहुव्रीह्योरविशिष्टेति। अत्राहुः—जपादिपर्युदासेन मन्त्रेष्वेव एकश्रुतिर्विधीयते । स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति। तदुक्तं—वेदलक्षणे जैमिनिना—'अनाम्नातेष्वमन्त्रत्वम्' इति । आपस्तम्बश्चाह 'अनाम्नाता अमन्त्राः यथा प्रवरोहनामधेयग्रहणानि' इति। अतएव मन्त्रो हीन इति पाठस्य शिक्षायां प्रसिद्धत्वेऽपि ऊह्यमानस्यामन्त्रतया यथेन्द्रशत्रुरिति वाक्ये सोऽसङ्गतः स्यादतो मन्त्रशब्दः शब्दमात्रपर इत्याशयेन भाष्ये 'दुष्टः शब्दः' इति पठितम्।

ननु 'स्वाहेन्द्रशत्रुर्वर्धस्व' इति वेदे पठ्यत एवेति चेत्, सत्यम्! अर्हितं यदमन्त्रभूतमनुकार्यं तदनुकरणस्य पाठेऽपि अर्थपरस्यानुकार्यस्य लौकिकत्वानपायात् । नन्विन्द्रशत्रुशब्दस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः, स्वरस्य वेदमात्रविषयकत्वादिति चेन्न, स्वरविधौ छन्दोधिकाराभावात्। एतावानेव हि भेदो—यच्छन्दसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थयाऽऽश्रीयते। लोके त्वैच्छिको विकल्पः। अत एव 'एकश्रुत्या सूत्रपाठस्त्रैस्वर्येण वा' इति पक्षद्वयमपि तत्र तत्रोपन्यस्तम्।

नन्वेवम् 'उच्चैस्तरां वा वषट्कारः'[1] इति सूत्राद्विकल्पानुवृत्त्यैव सिद्धौ 'विभाषा छन्दसि'[2] इत्यत्र विभाषाग्रहो व्यर्थः स्यात्। प्रसज्यप्रतिषेधे तु नायं दोषः, यज्ञकर्मणीत्यस्य निवृत्तये पुनर्विभाषाग्रहणात्। न च पर्युदासपक्षेऽप्येवमेवास्त्विति वाच्यम्, नित्यविकल्पविध्योर्विषयभेदस्यावश्यकतयाऽऽरम्भसामर्थ्यादिव तन्निवृत्तिसिद्धेः। प्रसज्यप्रतिषेधे तु नारम्भसामर्थ्यम्, ऊहादिष्वमन्त्रेषु चरितार्थस्य पूर्वविधेरुत्तरेणच्छन्दो

१—पा० सू० १।२।३५
२—पा० सू० १।२।३६

मात्रविषयकेण बाधसम्भवात्। न ह्यूहादीनां छन्दस्त्वमस्ति, मन्त्रब्राह्मणेतरत्वात्। तस्मादसमर्थसमा समाश्रित्यापि प्रसज्यप्रतिषेध एवागत्या स्वीकर्त्तुमुचित इति चेन्न, पर्युदासपक्षेऽपि मन्त्रे नित्यम्, ब्राह्मणे वेति विषयविभागसम्भवेन यज्ञकर्मनिवृत्तये विभाषाग्रहणसम्भवात्। उक्तापरितोषादेव तु केचिज्जपादिषु प्रसज्यप्रतिषेधमाश्रित्योहेऽप्येकश्रुतेः प्राप्तौ सत्यां तदकरणं बहुव्रीहिस्वरकरणञ्च स्वरतोऽपराधादित्यस्यार्थं इत्याहुः।

अथ च शब्दज्ञानस्य प्रशंसावसरेऽपशब्दज्ञानस्य च निन्दावसरे 'स्थाणुरयं भारहारः किलाभूद-धीत्यवेदं न विजानाति योऽर्थम्।'

'योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा'!

इत्युदाहरणेन शब्दज्ञाने धर्मः, अपशब्दज्ञानेऽधर्मः।

शब्दाश्चाल्पीयांसः, अपशब्दाश्च भूयांसः। अतोऽपशब्दज्ञानमवतां वैयाकरणानां भूयांसि पापानि भवन्ती इति व्याकरणस्य सम्यग्ज्ञानमपेक्षितम्।

प्रयाजाः सविभक्तिकाः कार्या इति याज्ञिकानां प्रतिज्ञा। व्याकरणप्रक्रियामन्तरा प्रयाजाः सविभक्तिकाः कर्त्तुं कथं शक्यन्ते।

प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः। यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्योऽयमहमिति, न तु अभिवादये देवदत्तोऽहम्—इत्यादिना संस्कृतवाक्येन, व्याकरणप्रक्रियाज्ञानाभावात्।

अथ च विद्वान् यजेत्, विद्वानेव याजयेत्, द्वयोरपि कार्ययोः विदुषामेवाधिकारः। विद्वांसश्च वैयाकरणा एव। यतो हि ते प्रक्रियावन्तो भवन्ति।

वेदस्वरूपवर्णने 'चत्वारि शृङ्गा, त्रयो अस्य पादाः, द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति, महो देवो मर्त्यां आविवेश[1]। व्याख्यानं तु चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। वेदस्य शृङ्गाणीत्यर्थः। वेदस्य त्रयः पादाः—भूतभविष्यद्वर्तमानकालाः। नित्यः कार्यश्च शब्दो वेदस्य शीर्षे। सप्त हस्ताः वेदस्य अर्थात् सप्त विभक्तयो वेदस्य हस्ता भवन्ति। उरसि कण्ठे शिरसि च बद्ध, तत्तत्स्थानेषु उच्चर्यमाणवर्णरूपो मर्त्यान् प्रविशति। अर्थात् महता देवेन परेण ब्रह्मणा साम्यं वैयाकरणानामेव भवति। पूर्वोक्तपदादीनाञ्च ज्ञानं प्रक्रियाज्ञानेनैव सम्भवति।

### धात्वर्थविमर्शः

'उणादयो बहुलम्'[2] सूत्रेऽस्मिन् 'नाम च धातुजमाह निरुक्ते' 'नाम खल्वपि धातुजमेवाहुः नैरुक्ताः।' 'व्याकरणे शकटस्य च तोकम्' वैयाकरणानां शाकटायन आह—'धातुजं नामेति' इति भाष्यादि-

१—म० भा० वा० पृ० ३०

२—पा० सू०

प्रामाण्यात् प्रकृतिषु च धातोः प्राधान्यात् तदर्थनिरूपणमेव प्रथमामर्हतामुपैतीति धात्वर्थो निरूप्यते—'फलव्यापारयोर्धातुः' इति।

फलव्यापारयोरित्यत्र विषयसप्तमी, अतो विषयत्वं सप्तम्यर्थः, विषयता चात्र वाचकतारूपा। फलस्य व्यापारस्य च निरूपितत्वसम्बन्धेन वाचकतारूपे सप्तम्यर्थेऽन्वयः, सप्तम्यर्थवाचकतायाश्च स्वरूपसम्बन्धेन धातावन्वयः। एवञ्च फलव्यापारनिरूपितवाचकतावान् धातुरिति शाब्दबोधः सम्पन्नः।

अत्रेदमाकूतम्—स्वभावात् द्वन्द्वसमासे समस्यमानानां सर्वेषां पदानामर्थानां प्राधान्यं भवति। यथा 'धवखादिरौ छिन्धि' इत्यादौ प्रत्येकं धवस्य खदिरस्य च च्छेदनाक्रियायां स्वातन्त्र्येणान्वयो दृश्यते, तथैवात्रापि 'फलव्यापारयोः' इति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्तिरिइति, 'एकवृन्तगतफलद्वय' न्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिः, इति वाऽनुमातुं शक्यते। अन्यथा 'स्तोकं वचति' इत्यत्र विक्लित्तिरूपे फले स्तोकरूपकर्मणोऽभेदेनान्वयो न स्यात्, न स्याच्च 'ग्रामं गच्छति' इत्यत्र ग्रामरूपकर्मणो भेदेसम्बन्धेन संयोगरूपे फले।

यतो हि 'नित्यस्य घटत्वगोत्वादिरूपैकदेशेऽन्वयतात्पर्येण 'नित्यो घटः, नित्यो गौः 'इत्यस्य प्रामाण्यवारणाय' पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तिः स्वीक्रियते। तदर्थं स्वीकृतायाञ्चास्यां व्युत्पत्तावत्रापि फलविशिष्टे व्यापारे व्यापारविशिष्टे फले च धातोः शक्तिस्वीकारे फलस्यैकदेशत्वादन्वयो न स्यात्। अतः पृथक्-पृथक् शक्तिरङ्गीकार्या।

## अथ सनर्थविचारः

सन् विधायकं प्रथमं सूत्रम् 'गुप्तिज्किद्भ्यः सन्' (पा० सू० ३।१।५) 'गुप् गोपने' 'तिज निशाने' 'कित्' 'निवासे' एतेभ्यो धातुभ्यः सन् प्रत्ययो भवति। 'प्रत्ययः' (पा० सू० ३।१।१) इति प्रत्ययसंज्ञाऽधिकृता। प्रत्ययसंज्ञा-अधिकृता—एवेति लेखनं विस्पष्टार्थम् यतो हि 'प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते आपञ्चमाध्यायपरिसमाप्तेः' इति वचनादेव प्रतिपाद्यस्यावगमत्वात्।

ननु सत्यपि प्रत्ययसंज्ञाया इहोपस्थाने नैव तया प्रत्ययसंज्ञया सनो भवितव्यम्, यतः प्रत्यय इत्यन्वर्था संज्ञा,प्रतिपत्त्यनेनार्थान्-इति प्रत्ययः। न च सना कञ्चनर्थं प्रतियन्ति, तस्या अनर्थकत्वात्; नहि इह सनः कश्चनार्थो निर्दिश्यते, न चानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भविष्यन्तीति स्वार्थ एव सन् भविष्यतीति युक्तं परिकल्पयितुम्, स्वगोपनादेः स्वार्थस्य सन्नन्तादप्रतीतेः। यदि अनर्थकस्यापि प्रत्ययाधिकारे विधानसामर्थ्यात्संज्ञा भविष्यतीति चेत्, न, एवं हि 'हनस्त च' (पा० सू० ३।१।१०८) 'त्रपुजतुनोः षुक्' (पा० सू० ४।१।१३) इति विकारागमयोरपि प्रत्ययसंज्ञा स्यात्। नैष दोषः, सनोऽप्यर्थोऽस्त्येव। कः पुनः सः निन्दादिः। तदाह—निन्दा क्षमाव्याधिप्रतीकारेषु सन् इष्यते इति कुतः पुनरेतत् सिद्धम् यद सनोऽर्थाः निन्दादय इति न वक्तव्यम्, अन्वयव्यतिरेकाभ्याम्—प्रति हि सनि जुगुप्सते—'इत्यादौ निन्दा-

दयोऽर्थाः प्रतीयन्ते। असति च सनि गुणादिषु गोपायतीत्यादौ निन्दादयो न प्रतीयन्ते। तस्मादर्थवानेव सन् इति भवत्येव प्रत्ययसंज्ञा।

## फलस्वरूपनिरूपणम्

यदुद्दिश्य धात्वर्थक्रियायां प्रवृत्तिः, तत्फलम्। तदेव च क्रियाफलत्वेनात्राभिप्रेतम्। यथा स्वर्गमुद्दिश्य यागो विधीयते। तत्र स्वर्गरूपं फलं यदि कर्त्ता अभिप्रैति, तदाऽऽत्मनेपदम्। एवं भविष्यद्धान्यमुद्दिश्य वपिर्विधीयत इति भविष्यद् धान्यं वपेः फलं यदि कर्त्तृगामि तदा आत्मनेपदम्। तथा भोजनमुद्दिश्य पाको विधीयते इति पाकफलस्य भोजनस्य कर्त्तृगामित्वे आत्मनेपदम्, न हि द्रव्यलाभादि यागादेः फलम्, द्रव्यलाभस्य कार्यान्तरेणापि सम्भवात्।

'स्वरितञितः०' (१।३।७२) इति सूत्रस्य भाष्यपर्यालोचनेन अस्यार्थस्य स्पष्टं प्रतीतिर्भवति। तत्र हि—'साधीयो यत्र क्रियाफलं कर्त्तारमभिप्रैति, न चान्तरेण यजिं याजिफलम्, वापि वा वपिफलं लभन्ते। याज्ञिकाः पुनरन्तरेणापि यजिं गा लभन्ते, भृतकाश्च पादिकम्' इति।

हरिरपि अमुमेवार्थं स्पष्टयति—

यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्॥ इति।

यागस्य स्वर्गविशेषरूपं वपेर्धान्यविशेषरूपं पाकस्य भोजनविशेषरूपञ्च फलं कर्त्ता नान्यतो लभेत। इह तु तादृशस्य फलस्य ग्रहणे सकर्मकाकर्मकत्वव्यवस्था नितरामुच्छिद्येत। यतो हि धात्वर्थफलाश्रयस्यैव कर्मत्वं विधीयते, उक्ताश्चार्था न हि कर्म श्रयन्ते। एतत्सर्वमभिप्रेत्य मूले आह—फलं विक्लित्त्यादि।

विक्लित्तिः = रूपान्तरम् = अवयवसंयोगविशेषः, अवयवविभागविशेषश्च। धात्वर्थफलस्य च विक्लत्तित्वादितत्तद्रूपेण वाच्यता न तु फलत्वेन, तथैव अनुभवो भवति।

धातुवाच्यव्यापारस्तु भावनाभिधा = साध्यत्वेनाभिधीयमाना क्रिया।

अत्र प्रमाणं वाक्यपदीयम्—

'यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥

सिद्धम् = भूतकालावच्छिन्नम्, 'अपाक्षीत्' इत्यादि। असिद्धम् = भूतकालानवच्छिन्नम्। अर्थात् वर्तमानकालावच्छिन्नं भविष्यत्कालावच्छिन्नञ्च। पचति, पक्ष्यति, इत्यादि। एतत् सर्वं साध्यत्वेनाभिधीयते। सा आश्रितक्रमरूपत्वात् = आश्रितम् अधिश्रयणाद्यवयवानां क्रमरूपम् = पौर्वापर्यं यया सा = आश्रित-

क्रमरूपा, तत्त्वात् । क्रियते=अवयवानां क्रमेणोत्पत्त्या या सा क्रियेत्यन्वर्था संज्ञेत्यर्थः । यत्र चास्त्यादौ पौर्वापर्यभावः, तत्राप्यारोपेण रूढ्या वा क्रियात्वं बोध्यम् ।

साध्यत्वेनेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति विहिततृतीयायाः प्रकारित्वमर्थः । तथा च साध्यत्वप्रकारकप्रतीतिविषय इत्यर्थः । 'पचति, करोति', इत्यादि तिङन्तस्थले 'किम्' कः, क्व', इत्यादि-साधनाकाङ्क्षासत्त्वेऽपि क्रियान्तराकाङ्क्षा नोदेति इति क्रियायाः साध्यरूपत्वम् । 'पाकः, कृतिः' इत्यादौ 'अस्ति, भविष्यति, नङ्क्ष्यति' इत्यादिक्रियान्तराकाङ्क्षा जायत इति सिद्धात्वं क्रियायाः । यतो हि यत्र क्रियान्तराकाङ्क्षा नोदेति सा साध्या क्रिया, यत्न चोदेति सा सिद्धा क्रियेति व्यवहार आप्तानाम् ।

यद्यपि 'पाकः' इत्यादावपि' किङ्कर्त्तृकः, किङ् कर्मकश्च पाकः' इत्याद्याकाङ्क्षायाः सत्त्वेन तत्र कर्त्रादिकारकाणामन्वयो दुरुपपादः स्यात् ? यतो हि कारकाणां साध्यक्रियायामेवान्वय इति शाब्दिकानां समयः । तथापि घञन्तादिस्थलेऽपि प्रकृत्या साध्यरूपक्रियायाः प्रत्ययेन च सिद्धरूपायाः क्रियाया उपस्थितिर्भवति । तत्र च साध्यरूपायां क्रियायां कारकाणामन्वयेन काप्यनुपपत्तिर्न स्यात् प्रमाणञ्चात्र भर्तृहरिः—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ।।' इति ।

अत एव स्तोकस्य साध्यविशेषणत्वे 'स्तोकं पाकः' इति, सिद्धविशेषणत्वे च 'स्तोकः पाकः' इति च सिद्ध्यति । 'पाकः' इत्यादिस्थले सिद्धसाध्ययोः क्रिययोरभेदेनान्वयस्य दुरुपपादतया स्ववृत्तिक्रियात्वरूप-सामान्यधर्मवत्तयाऽन्वये न किमपि बाधकं स्यात् ।

पचतीत्यादौ फूत्कारत्वाधःसन्तापनत्वादिप्रकारकबोधस्यानुभवसिद्धत्वेन साध्यत्वेन प्रतीयमानो व्यापारस्तत्तद्रूपेणैव वाच्यः । तत्राधिश्रयणमात्रस्य धातुना विवक्षितत्वे 'स्थाली पचति' इति, अधःसन्तापन-मात्रस्य तथात्वे काष्ठानि पचन्ति' इति, धातुना तदविवक्षायाम्' स्थाल्यां पचति' 'काष्ठैः पचति' इत्यादयः प्रयोगाः सिद्ध्यन्ति । फूत्कारादेरेकस्यापि पूर्वापरीभूतावयवत्वेनैव क्रियात्वाध्यासात् क्रियात्वम् । प्रतिपादि-तञ्चैतद् भर्तृहरिणा—

'एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ।।'

फूत्कारादिनिरूपितं शक्ततावच्छेदकन्तु पचित्वादिरूपतत्तदानुपूर्वीरूपमेव । पचादिरपि सङ्केत-सम्बन्धेन धातुपदवत्त्वेन रूपेण क्रियात्वप्रकारकसामान्यक्रियोपस्थापक एव ।

अत एव कौमुद्यामुक्तम्—'धातुत्वेन सकलधातुवाच्या' इति । 'भूवादयो धातवः' इत्यत्र तु न धातुत्वेन क्रियासामान्यवाचकत्वम्, तस्यैव शक्तिग्राहकत्वेन तदर्थबोधात् प्राक् धातुपदवत्त्वेन भ्वादीनां

बोधकत्वासम्भवात् । अतस्तत्र 'क्रियावाचिनः' इत्यस्य क्रियात्वव्याप्यतत्तद्व्यापारवाचिन इत्यर्थः । तत्र धातुपदवत्त्वेन धातुपदशक्यतावच्छेदकतया क्रियात्वं जातिः । एवं क्रियानिरूपितशक्ततावच्छेदकतया पच्यादिनिष्ठं धातुत्वमपि जातिरूपमेव । अत्रैव तात्पर्यग्राहकम्' 'भूवादयो धातवः' इति सूत्रमिति दीक्षितादयः ।

नागेशभट्टस्तु—धातुत्वन्तु न शक्ततावच्छेदकम्, अतिप्रसक्तत्वात्, धातुत्वाद्यजानतोऽपि बोधात्, तादृशशक्तिग्रहस्य दृष्टफलाभावेनादृष्टमात्रार्थकत्वापत्तेश्चेत्याह ।

यदि फूत्कारत्वाधःसन्तापनत्वादिनानाधर्मेण धातुनां शक्यता स्वीक्रियते, तदा प्रत्येकं धातोः नानार्थकत्वं स्यात् ? अनेकधर्मविशिष्टस्यार्थस्य एकधर्मविशिष्टः शब्दो वाचक एव नानार्थको मन्यते । नानार्थकत्वञ्च नेष्टं पच्यादेः । यतो नानार्थकस्थले उपस्थितानामनेकेषामर्थानामेकस्य ग्रहणे प्रकरणादीनां नियामकत्वेन दृष्टतया 'पचति' इत्यादौ तु प्रकरणाद्यनपेक्षितत्वेन फुत्कारादीनां बोधस्य दर्शनात् न नानार्थकत्वं सम्भवति ।

प्रश्नस्यास्य 'तदादि' न्यायेन समाधानं कर्त्तुं शक्यते । तथाहि—यथा तद्यद् इत्यादिशब्दानां घटत्वपटत्वादिरूपेण नानार्थशक्ततया नानार्थकत्ववारणाय वक्तृबुद्धिविशेषोपलक्षिता ये घटत्वपटत्वादयो धर्माः, तद्विशिष्टे तदादीनां शक्तिस्वीकारेण न नानार्थकत्वम्, तथा प्रकृतेऽपि पच्यादिधातुप्रयोक्तृसमवेत बुद्धिविशेषफुत्कारादिसमूहविषयकैकबुद्ध्युपलक्षिता ये फुत्कारादयो धर्माः, तद्विशिष्टे पच्यादेः शक्तिः स्वीक्रियते । अननुगतनानाधर्मविशिष्टार्थवाचक एव नानार्थकः । पच्यादौ तु बुद्धिविशेषस्यानुगमकस्य सत्त्वात् न नानार्थकत्वम् । बुद्धेरपि आश्रयभेदाद् तद्व्यक्तित्वेन भेदादनुगमाभावेऽपि बुद्धित्वेनानुगमः शक्यः ।

अथ अवयवीभूतफुत्कारादिव्यापारणामाशुविनाशित्वाद् युगपदवस्थानासम्भवेन तत्समूहासम्भवात्' आख्यातेनैका क्रिया प्रत्यायते इति 'प्रशंसायाम्०' (५।३।६६) इति सूत्रस्य भाष्यासङ्गतिः, 'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति' इति 'सरूप' सूत्रस्य भाष्यासङ्गतिश्च नाशङ्कनीया, फूत्कारादि-विषयकसमूहालम्बनरूपया एकबुद्ध्या सर्वेषां विषयीकरणात् एकत्वं सेत्स्यति । अर्थात् बुद्धिविशेषगतैकत्वं क्रियायामारोप्यत इत्याशयः ।

अत्र वाक्यपदीयकारस्यापि सम्मतिः प्रस्तूयते—तथाहि—

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ इति ।

अस्यायम्भावः—क्रमजन्मनाम् = क्रमेण = पौर्वापर्येण, उत्पत्तिमतां फूत्कारादिव्यापाराणां समूहो बुद्ध्या संकलनात्मैकत्वबुद्ध्या समूहालम्बनात्मिकया वा प्रकल्पितोऽभेदो यत्र समूहे स बुद्धिप्रकल्पितसमूह एव क्रिया। अभेदश्चावयवानाम्। स च समूहो गुणभूतः, तत्तद्रूपेण भासमानैः समूहे प्रकारीभूतैर्वावयवैः फूत्कारादिभियुक्तः क्रियेति व्यपदिश्यते व्यवह्रियते इत्यर्थः। तथा च एकावयवेऽपि समूहरूपारोपादधिश्रयणाद्यैकैकक्रियादशायामपि पचतीत्यादि व्यवहारो न विरुद्ध्यते।

विभिन्नानामाचार्याणां धात्वर्थविषयकसिद्धान्तसङ्ग्रहः।

अत्र प्राचीनवैयाकरणाः—'फलव्यापारयोर्धातुः' इति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक् शक्ति। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिरूपकर्मणश्च भेदेनान्वयः। विशिष्टे शक्तिस्वीकारे पदार्थैकदेशत्वेन फले कर्माद्यनन्वयापत्तिः। नैयायिकानामाख्यातपदोपस्थापितयोः कृतिवर्तमानयोरिव, वैयाकरणानां कर्तृसङ्ख्ययोरिव च व्युत्पत्तिवैचित्र्येण धातुपदोपस्थापितयोः फलव्यापारयोः परस्परान्वयबोधः स्यादेवेति वदन्ति।

---

# सनादीनां 'प्रत्ययः' 'परश्च' इत्यनयोरधिकार-पठितत्वात् प्रत्ययत्वं परत्वञ्च

इह यदि सर्वानेव संज्ञिनः स्वरूपेण निर्दिश्य संज्ञा विधीयेत सन् प्रत्ययः, क्यच्प्रत्ययः, क्यङ्प्रत्यय इति, ततो गौरवं स्यात् । अथ 'सप्' प्रत्यय इति सनः सशब्दादारभ्य कपः पकारेण प्रत्याहाराश्रयेणात्र वा प्रदेशान्तरे वा संज्ञा विधीयेत, तदानेकस्य पकारस्य सम्भवात्सन्देहः स्यात् । तथा हि—प्रत्यासत्तिन्याये आश्रीयमाणे सिपः पकारेण स्याद्, व्याप्तौ तु 'तप्तनप्तनथनाश्च' इति तनपः । स्यादेतत् —व्याप्तिरेवाश्रयिष्यते, अथ च तनपः पकारेण प्रत्याहारो न भविष्यतिः, ज्ञापकात्, यदयम् 'इच एकाचोऽम्प्रत्ययवच्च' इत्यमः प्रत्ययवद्भावं शास्ति, अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादमोऽपि स्वत एव प्रत्ययत्वात्तद्भावो नातिदेश्यः स्यादिति ? तन्न, तत्र ह्यमिति द्विरावर्तते, ततश्चाप्रत्यय इति वृद्धम् 'ओतोऽम्शसोः' इत्यादि-विशिष्टं कार्यं यथा स्यादिति सोऽतिदेशः स्यात् । नन्वेवमपि प्रत्ययग्रहणमनर्थकम्, अम्वदिति वक्तव्यम्, अतः प्रत्ययग्रहणात्प्रत्ययप्रयुक्तमपि कार्यमतिदेश्यमिति प्रतीयते, तज्ज्ञापकमुक्तार्थस्य भविष्यति ? एवमप्यम आगमत्वात्पुगादिवदप्राप्तेः प्रत्ययत्वातिदेशः स्यात् । अस्तु वा ज्ञापकम्, एवमपि कुत एतद्व्याप्तिराश्रीयते, न पुनः प्रत्यासत्तिरिति ? किञ्च यथान्यासाद्गौरवं स्थितमेव, सबित्यस्याधिकस्य करणात् ? अतो गौरवाति-प्रसङ्गपरिहारायाधिकारेणेयं संज्ञा विधीयते । तदाह—प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते इति । 'कारके' इति तद्विशेषणमधिक्रियते, स्वादिषु कप्पर्यन्तेषु प्रकृतिरियमधिक्रियत इतिवत् । 'प्रत्ययशब्दः संज्ञाधिक्रियते' इति वक्तव्ये संज्ञात्वेनेति वचनमनर्थभेदात् । तथा ह्ययमत्र कर्मकरत्वेनाधिकृतः, अयमत्र कर्मकरोऽधिकृतः, नार्थभेदोऽस्ति: किन्तु 'कर्मकरोऽधिकृतः' इत्युक्ते यः कर्मकरः सोऽधिकृतो रूपान्तरेणेत्यपि गम्यते, कर्मकरत्वेनेति पुनरुच्यमाने तस्यैवाकारस्याधिकृतत्वं गम्यते । अधिक्रियते = विनियुज्यते सूत्रकारेण । यान् = नादीननुक्र-मिष्यामः = अनुक्रमेण विन्यस्यामः । सूत्रकारायमाणस्य वृत्तिकारस्यैतद्वचनम् ।

यदि तर्ह्यधिकारेण संज्ञा क्रियते, प्रतियोगमुपस्थानात्प्रकृत्युपपदोपाधिविकारागमानामपि प्राप्नोति 'हरतेर्दृतिनाथयोः पशौ' हरतेरिति प्रकृतिः, दृतिनाथयोरित्युपपदम्, पशावित्युपाधिः, 'हनस्त च' इत्यादि-विकारः, 'ऋभुजनुनोः षुक्' इत्यागमः । तस्यां च संज्ञायां प्रकृतिप्रत्ययोः पर्यायेण परस्परापेक्षं परत्वं स्यात्; शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य ? उपपदस्यापि परत्वात् 'उपसर्जनं पूर्वम्' इत्येतद्राज-पुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात्, यत्र समासाभावात् 'उपसर्जनं पूर्वम्' इत्यस्याप्रसङ्गः, तत्रोप-पदस्य परत्वं स्यात् ? एवं च सति भोक्तुं व्रजतीत्येवमेव नित्यं स्यान्न तु व्रजति भोक्तुमिति, उपाधेरप्यर्थस्य

परत्वासम्भवेऽपि तद्भाविनः प्रयोगानियमे प्राप्ते । परश्चेति नियमः स्यात् ? आद्युदात्तत्वं च यथायथं स्वरान्तरं बाधित्वा स्यात् ? अङ्गसंज्ञा तु विधानप्रतिबद्धा, न चेह प्रकृत्यादयः, कुतश्चिद्विधीयन्ते इति न सा प्रकृत्यादिषु परतः पूर्वस्य प्राप्नोति ? ननु च प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात्प्रकृत्यादीनां संज्ञा न भविष्यति, तथा हि—हरतेर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्त्तरीन् प्रत्ययो भवतीत्येकं वाक्यम्, ते च हरत्यादयः प्रत्ययसंज्ञका इति द्वितीयम्, सम्भवत्येकत्राश्रयत्वे वाक्यभेदस्तु नेष्यते ? नैतदस्ति; सनादीनामप्यसतां संज्ञानुपपत्तेर्वाक्यभेदेनैव संज्ञा विधेया, ततश्च सनादीनामेकेन वाक्येन विधिरपरेण संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्राप्नोति ? तत्राह—प्रकृत्युपपदेत्यादि । अयमभिप्रायः—प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात्पारार्थ्यात्स्वसंस्कारं प्रति प्रयोजकत्वाभावः, यथा—यः पीठे स देवदत्त इति पीठस्य देवदत्त संज्ञा न भवति ।

ननु सनाद्युत्पत्तिवाक्ये प्रथमे तेषां पारार्थ्यम्, न द्वितीये संज्ञासंज्ञिसम्बन्धप्रतिपादनपरे वाक्ये, ततश्च संज्ञासम्बन्धप्रतिपत्तौ सत्यां स्वार्थतापि सम्भवत्येव ? तन्न;, द्वितीयमपि वाक्यं संज्ञाविधानपरमेवं रूपमेव—गुप्तिज्किद्भ्यः सन् प्रत्यय इति, ततश्च तत्रापि भूतविभक्त्या निर्देशान्निमित्तत्वात्पारार्थ्यं स्थितमेव । किञ्च, योग्यविभक्त्यभावाच्च न प्रकृत्यादीनां संज्ञा, प्रथमान्तस्य षष्ठ्यन्तस्य वा संज्ञासम्बन्धः 'वृद्धिरादैच्' 'स्वं रूपं शब्दस्य' इति । न च द्वितीये वाक्ये योग्यविभक्त्यध्याहारेण संज्ञा भवितुमर्हति; योग्यविभक्तिनिर्दिष्टेषु सनादिचरितार्थत्वात् । उपपदसंज्ञा तु सप्तमीनिर्दिष्टस्य विधीयमाना युक्तं यद्वाक्यभेदेन योग्यविभक्त्यध्याहारेण च भवतीति । किञ्च, प्रधानेतरसन्निधौ प्रधाने कार्यसंप्रत्ययो भवति, यस्य नापूर्वविधानं तत्प्रधानम्, अतः प्रथमवाक्ये तावत्सनादीनामेव प्राधान्यम्, द्वितीयेऽपि संज्ञा संज्ञिनमपेक्षमाणा यत्पूर्ववाक्ये प्रधानतयावगतं तदेवापेक्षते, न तु पारतन्त्र्यादप्रधानमिति सिद्धमिष्टम् । एवमपि विकारागमानां प्राप्नोति ? नैष दोषः, महती संज्ञा क्रियते, अन्वर्थसंज्ञा यथा विज्ञायेत—प्रतियन्त्यनेनार्थमिति प्रत्यय इति । न च विकारागमाभ्यामर्थं प्रतियन्ति । यद्येवम्, 'अवेः कः' इत्यादीनां समासान्तानां च न स्यात्, न ह्येषामन्वयव्यतिरेकाभ्यां कश्चिदर्थोऽवधार्यते, तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थानवगमात् ।

तदप्युच्यते—अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एवैषामर्थ इति, तदपि कल्पनामात्रम्; अन्वयव्यतिरेकगम्यत्वादर्थवत्त्वस्य । इतरेतराश्रयत्वं च प्रत्ययप्रदेशाः—'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्येवमादयः । भवति—सति प्रत्ययत्वे स्वार्थे विधानम्, स्वार्थे विधानाच्चार्थवत्त्वे सति प्रत्ययसंज्ञेति । एवं तर्हि प्रयोजनाभावान्न भविष्यत ? तथा हि तेषां स्थानषष्ठ्या सम्बन्धस्यावयवसम्बन्धस्य च प्रतिपादनात्परत्वं तावन्न सम्भवति, आगमानां चानुदात्तत्वविधानाद्युदात्तत्वस्यासम्भवः, सति तु प्रयोजने आगमस्यापि श्नमःशकारस्येत्संज्ञार्थं भवत्येव संज्ञा । अथ 'हनश्च वधः' 'नाभि नभश्च' विराग विरङ्गश्च' इत्यादौ वधादीनामनेकालानामादेशानां संज्ञा कस्मान्न भवति, सम्भवति हि तेषु परत्वं प्रयोजनम् ? यद्यपि

# विभजते

नाम प्रकृतिकश्चायं,
धातुप्रकृतिकस्तथा।
तत्रादिमः क्यच्क्यङादि,
रपरः सन्यङादिकः ॥

अयं धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्चेति द्विविधः । तत्रादिमो नामप्रकृतिकः क्यच्-क्यङादिः, अपरो धातुप्रकृतिकः सन्यङादिः । चैत्रः पुत्रीयतीत्यत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूत-पुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेस्तस्याश्च तिङर्थ आश्रयत्वे निरूपकत्वेनान्वये साकाङ्‌क्षत्वात्, पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववांश्चैत्र इत्येवमन्वयधीः, अत एव मनुष्यत्वादिप्रकारेण पुत्रेच्छादशायां पुत्रीयतीत्यदिको न प्रयोगः, किन्तु मानुषीयतीत्यादिरेव । अत एवात्मनः पुत्रीयतीत्यादेरात्मपुत्रत्वप्रकार-केच्छाबोधन एवासामर्थ्यम् । आत्मपुत्रत्वादेस्तत्र प्रकृत्यर्थतावनवच्छेदकत्वात्, आत्मसम्बन्धी यः पुत्रः, पुत्रत्वेन तद्गोचरेच्छाया बोधने तु तस्य सामर्थ्यमेव, चैत्रस्य गुरुकुलमित्यादाविव वृत्तिशब्दैकदेशेऽपि पुत्रादावात्मप्रभृतेः प्रतियोगिगिविधयान्वयस्य व्युत्पन्नत्वात् । आत्मपुत्रीयतीत्यादौ पुनरात्मपुत्रत्वादेरपि प्रकृत्यर्थतावच्छेदकत्वात्, तदवच्छिन्नपुत्रविषयताकेच्छाबोधने न किमपि बाधकं पश्यामः । एतेन पुत्रं काम्यति, इदं काम्यतीत्यादौ, काम्यस्याप्यर्थो व्याख्यातः । पुत्रीयति माणवकमित्यादौ, तु आचारसदृशाचारः क्यजर्थः, तद्विशेषणीभूत आचारे प्रकृत्यर्थस्य विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः, तेन पुत्रकर्मकाचरण-सदृशं यन्माणवककर्मकाचरणं तदनुकूदकृतिमानित्याकारकस्तत्र बोधः । पुत्रकर्मकाचरणञ्चेहान्नदानादिना संवर्द्धनतोषणादि । सर्पीयति शत्रुमित्यादौ सर्पकर्मकाचरणतुल्यं यच्छत्रुकर्मकाचरणं तदनुकूलकृतिमा-नित्यर्थः, सर्पकर्मकाचरणञ्चात्र सर्पकर्मकताडनमारणादि ग्राह्यम् । प्रासादे कुटीयतीत्यस्य कुट्यधिकरण-काचारसदृशो यः प्रासादाधिकरणकाचारस्तदनुकूलकृतिमानित्यर्थः, कुट्यधिकरणकाचारश्चेह कुट्यधिकरण-कशयनादिरूपो द्रष्टव्यः । कर्माधिकरणयोरेव सदृशाचारे क्यचो विधानात् । वह्निकण इवाचरति धूलिः दण्डेनेवाचरति चक्रेणेत्याद्यर्थे च न क्यच् धूलिर्वह्निकणीयति, चक्रेण दण्डीयतीत्यादिकः कर्तृकरणादेः सदृशाचारे अप्रयोगः । 'मान्यताव्ययाभ्यां न स्या' दित्यनुशिष्टेरिदमिच्छति । स्वरिच्छतीत्याद्यर्थे इदमिवाचर-तीत्याद्यर्थे च न क्यच् । गव्यति नाव्यतीत्यादावपि, गामिच्छति, गामिवाचरति, इत्यादिरर्थः । औदोद्भ्यां क्यस्वरवद्भावादवाद्यादेशः । नमस्तपोवरिवसां कर्तृत्वेऽपि क्यचो विधानात्, नमस्यति देवानित्यस्य

देवर्नति, तपस्यति शत्रुमित्यस्य शत्रुसन्तापं, वरिवस्यति गुरूनित्यस्य च गुरूणां परिचर्य्यां करोतीत्यर्थः। श्येनायते काक इत्यादौ, क्यङोऽपि आचारसदृशाचारोऽर्थः, तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात्, श्येनकर्तृकाचारसदृशाचारवान् काक इत्येव तत्र बोधः, श्येनकर्तृकाचारश्च मांसहरणादि-विशिष्य ग्राह्यः। श्येनी इवाचरतीत्यर्थे श्येनायते काकीत्यत्र भाषितपुंस्कत्वात् क्यङि पुंवद्भावः। गार्ग्य-मिच्छतीत्याद्यर्थे गार्ग्यीयतीत्यत्र क्यचीव गार्ग्य इवाचरतीत्याद्यर्थे गार्गीयते, इत्यत्र क्यङ्यप्यपत्यप्रत्ययस्य लोपः, तथा राजीयतीत्यादौ नस्य। ओजायते, अप्सरायते, पयायते, पयस्यते, गर्दभति, अश्वतीत्यादा-वप्युक्तरीत्यैवान्वयः।

"आजेसोऽप्सरसो नित्यं,
पयसः सो विभाषया।
क्यङोऽपि लोपो द्रष्टव्यो,
गर्द्दभत्यश्वतीत्यतः॥

इति वचनादेषु सादेर्लोपः, अत्रौजःपदस्यौजस्विपरत्वमिति निबन्धारः। गव्यते, भाव्यते, इत्यादेरपि गौरिवाचरतीत्यादिरर्थः, पूर्ववदवादेशः, पूर्वमनुन्मना उन्मनावदाचरति, इत्यर्थेऽप्युन्मनायते दुर्मनायते। अवेहत् वेहदिवाचरतीत्यर्थे वेहायत इत्यादौ तस्य लुक्, गोर्गर्भोपघातिनी वेहत्। अलोहितो लोहितो भवतीत्यर्थे लोहितायति, लोहितायते, स्वरितत्वादुभयपदम्। सुखमनुभावयतीत्यर्थे सुखायते, एवं दुःखायते, अलीकायते इत्यादि। शब्दं करोतीत्यर्थे शब्दायते एवं वैरायते, कलहायते। गिलितस्य पुनश्चर्वणं रोमन्थः, तं करोतीत्यर्थे रोमन्थायते गौः।

"मुण्डादेस्तत् करोत्यर्थे;
गृहात्यर्थे कृतादितः।
वक्तीत्यर्थे च सत्या देर—
ङ्गादेस्तन्निरस्यति॥

इति भागुरिस्मृतेः, नरं मुण्डयतीत्यत्र नरनिष्ठमुण्डनं जलं मिश्रयतीत्यत्र जलनिष्ठमिश्रणं, वासः शिथिलयतीत्यत्र वासोनिष्ठशैथिल्यम्, अन्नं मधुरयतीत्यत्रान्ननिष्ठमाधुर्य्यं, चैत्रं मित्रयतीत्यत्र चैत्रनिष्ठ-मित्रत्वं करोतीत्यादिको नामप्रकृतिकस्य णेरर्थः। तत्र मुण्डादिपदस्य धर्मपरत्वात् मुण्डादिण्यन्तधात्वर्थता-वच्छेदकीभूतफलवत्त्वाच्च नरादेः कर्मत्वमिति सम्प्रदायविदः। वासः पृथु, मृदु, भृशं वा करोतीत्यर्थे, वासः प्रथयति, म्रदयति, भ्रशयति, इत्यादावृतो रेफादेशः। तथा चैत्रं परिब्रढयति, इत्यत्रापि। कण्ड्वादिभ्यस्तत्-करोतीत्यर्थे यगेव, न तु णिः, तेन गात्रं कण्डूयति कण्डूयते, वा इत्यत्र गात्रस्य कण्डुं करोतीत्यर्थः, स्वर्गलोके महीयते, ङानुबन्धेषु पाठा-ञित्त्वादुभयपदम्। एवं स्वर्गलोके महीं वसतिस्थानं करोतीत्यर्थे,

दात्मनेपदम्, शब्दादिभ्यः करोतीत्यर्थे क्यङि वेत्युक्तम् । कृतयति, वर्णयतीत्यादौ कृतं गृह्णातीत्यादिरर्थः, सत्यापयति, अर्थापयति, इत्यत्र च सत्यं वक्तीत्यादिरर्थः; सत्यादित्रिकादावागमश्च । प्रियं स्थिरं वा वक्तीत्यर्थे, प्रापयति, स्थापयति, इत्यादौ प्रिस्थिरादेः प्रस्थाद्यादेशोऽपि । अश्वतरं वदतीत्यर्थे अश्वयति, इत्यत्र तरप्रत्ययलोपश्च । गोमन्तमाचष्टे, इत्यर्थे गवयति, गुणवन्तमाचष्टे, इत्यर्थे गुणयति, स्रग्विणमाचष्टे इत्यर्थे स्रजयति, इत्यादौ तु मन्तुवन्तु बिना लुगपि । तथा कर्तारमाचष्टे इत्यर्थे कारयतीत्यत्र तृचः, अन्तिकमाचष्टे इत्यर्थे नेदयति, बाढमाचष्टे इत्यर्थे साधयति, इत्यत्र चा 'न्तिकबाढयोर्नेदसाधौ च'। युवानमल्पं वा वदतीत्यर्थे कनयति, 'युवाल्पयोः कन्वे' त्यनुशिष्टेः' पक्षे यवयति, अल्पयतीत्यपि, स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे 'स्थूल-दूर-युव-क्षिप्र-क्षुद्राणामन्तस्थादिलोपो गुणश्चे 'त्यनुशिष्टेः, क्रमेण, स्थवयति, दवयति, यवयति, क्षपयति, क्षोदयति, इत्येव प्रयोगः । बहूनाचष्टे इत्यर्थे भूययति, 'बहोर्भूर्यदिशश्च । हस्ताद्यङ्गेभ्यस्तन्निरस्यतीत्यर्थेऽपि णिः, तेन हस्तं निरस्यतीत्याद्यर्थे हस्तयते, पादयते, इत्यादि, पूर्ववदात्मनेपदम् ।

"तूस्ताद्विघाते संच्छादे,
वस्त्रात्पुच्छादितस्तथा ।
उत्क्षेपादौ कर्मणो णि—
स्तत्तदव्ययपूर्वतः" ॥

इति भागुरिस्मृतेः 'तूस्तं विनिहन्तीत्यर्थे वितूस्तयति, तूस्तं केशजटा, वस्त्रं संच्छादयतीत्यर्थे संवस्त्रयति, पुच्छमुत्क्षिपतीत्यर्थे उत्पुच्छयते गौः, एवं परिपुच्छयते । भाण्डानि सञ्चिनोतीत्यर्थे संभाण्डयते भिक्षुः, चीवरं सम्भार्जतीत्यर्थे सञ्चीवरयते । कर्मण इत्युक्तेस्तूस्तेन विनिहन्तीत्याद्यर्थे न णिः, तूस्तयति, प्रतूस्तयति, इत्यादितः कथितार्थानामप्रतीतेस्तत्तदव्ययपूर्वकत्वनियमः ।

"वीणात उपगाने स्या,
द्धस्तितोऽतिक्रमे तथा ।
सेनातश्चाभियाने णिः,
श्लोकादेरप्युपस्तुतौ ॥

इति भागुरिस्मृतेरत्रापि तत्तदव्ययपूर्वत इत्यनुषज्यते । तथा च, वीणया उपगायतीत्यर्थे उपवीणयति यशः, हस्तिनातिक्रामतीत्यर्थे अतिहस्तयति गृहं, सेनयाभिमुखं यातीत्यर्थे अभिसेनयति समरं, श्लोकैरुपस्तौतीत्यर्थे उपश्लोकयति शिवमित्यादिकः प्रयोगः । कर्मप्रत्यये तूपवीण्यते यश इत्यादि, वीणादेः करणतास्थल एवायं विधिरिति वीणायामुपगायतीत्याद्यर्थे न णिः साधुः । अशनधनाभ्यामाय उदकान्न्यः कलोपश्च तदिच्छतीत्यर्थे, तेन अशनायति, धनायति, उदन्यतीत्यादावशनमिच्छतीत्यादिरर्थः अशनायादिकं

धात्वन्तरमित्यपि वदन्ति। चैत्रं भावयति, आत्मानं गमयति, इत्यादौ धातुप्रकृतिकस्य णेरप्यनुकूलव्यापारो व्यापारमात्रं वार्थः, तत्र धात्वर्थस्यानुकूलताया संसर्गविधयापि भानसम्भवात्। तेन तत्र चैत्रोत्पत्त्यनुकूल व्यापारवान्, आत्मगत्यनुकूलव्यापारवानित्यादिरर्थः। क्वचिज्ज्ञानानुकूलव्यापारोऽपि ण्यर्थः, यथा कथकः कंसं घातयति, इत्यादौ अभिनयादिरूपः। चुरादिभ्यस्तु स्वार्थिकस्य णेः स्वरूपमर्थः, तेन चोरयति, चिन्तयति, इत्यादौ स्तेयादिस्वरूपस्यानुकूलकृतिमानित्यादिरर्थः।

"गुपूधूपविच्छिपणि,
पनेरायः कमेस्तु णिङ्।
ऋतेरीयङ् चतुर्लेषु,
नित्यं स्वार्थे परत्र वा॥

इति भागुरिः। स्वार्थे, स्वरूपार्थे, तेन गोपायतीत्यस्य रक्षणस्वरूपं, धूपायतीत्ययस्य सन्तापस्वरूपं, विच्छायतीत्ययस्य गतिस्वरूपं, पणायते इत्यस्य व्यवहारस्वरूपं, स्तुतिस्वरूपं वा करोतीत्यर्थः। 'आकर्णयामास न वेदनादान्नचोपलेभे वणिजां पणाया'[1] इति व्यवहारार्थे भट्टिः। पणायते, इत्यस्य तु स्तुतिस्वरूपं करोतीत्येवार्थः स्वरूपार्थकत्वात् 'अल्पापि विप्रगोपाया स्वर्गानन्त्यप्रदा भवे' दित्यादिकः प्रयोगः अल्पादेः क्रियाविशेषणत्वे क्लीवत्वापत्तेरित्युक्तप्रायम्। स्वर्गं कायते इत्यस्य स्वर्गगोचरेच्छास्वरूपवानित्यर्थः, ङानुबन्धत्वादात्मनेपदम्। ऋतीयते इत्यस्य घृणास्वरूपं करोतीत्यर्थः। परत्र वेत्युक्तेश्चतुर्लकारादन्यत्र गोप्ता, गोपायिता, कमिता, कामयिता, अर्त्तिता, ऋतीयिता, इत्यादिको द्विविधः प्रयोगः।

'गुपो वधेश्च निन्दायां,
क्षमायाञ्च तथा तिजः।
प्रतीकाराद्यर्थकाच्च,
कितः स्वार्थे सनो विधिः॥'

इति भागुरिः। तेन जुगुप्सते, वीभत्सते, इत्यत्र निन्दास्वरूपस्य कर्त्ता इत्यर्थः, अत एव 'जुगुप्सा स्वल्पापि क्षपयति महत्त्वं परिषदीत्यादिकः प्रयोगः। तपस्तितिक्षते, इत्यस्य तपःकर्मकसहनस्वरूपस्य कर्त्तेत्यर्थः। चिकित्सत्यातुरमित्यस्यातुरकर्मकप्रतीकारस्वरूपं करोतित्यर्थः। रिपुंवचिकित्सतीत्यस्य रिपुकर्मकनिग्रहस्वरूपं करोतित्यर्थः। विचिकित्सति मन्मनः, इत्यादौ च मन्मनः सन्देहस्वरूपवदित्यर्थः। एषमर्थान्तरे तिङो नाभिधानमिति भागवृत्तिः, तेन संगोपन—निशान—निवासाद्यर्थेषु गोपनं तेजनं केतनमित्यादिकमेव प्रत्युदाहरणं 'मानदानशानभ्योऽपि स्वार्थे सन्' तेन मान पूजायां विचारे वा इत्यस्य

---

१—'स प्रोषिवानेत्य पुरं प्रविश्य, शुश्राव नादान्न जनौघजन्यान्। इति पूर्वार्द्धम्।

मीमांसते, दान अवखण्डने इत्यस्य दीदांसते, शान तेजने इत्यस्य शीशांसते, इत्यत्राप्युक्तदिशैवान्वयः । पाकं चिकीर्षति, ओदनं बुभुक्षते, इत्यादाविच्छैव सनोऽर्थः, तस्याञ्च द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्तृकत्वसम्बन्धेनान्वयात् पाकधर्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वानित्यादिरर्थः । समानकर्तृत्वस्य निवेशात् अन्यदीयकृतिपाकादाविच्छावत्ययं चिकीर्षति, पिपक्षति, इत्यादिको न प्रयोगः, इति चिन्तामणिकृतः । सोन्दड़स्तु, पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवान्वयः, तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सनर्थेच्छायां, तथा च, पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावान् इत्यादिरेवार्थः, कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वात्, अत एव गृहं तिष्ठासतीत्यादिको न प्रयोगः, स्थितेर्गृहकर्मकत्वबाधात्, अन्यथा गृहधर्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात्, न तु गृहे तिष्ठासतीत्यादिरिति प्राह । चिकीर्षादेः प्रवृत्त्यादिरूपेष्टसाधनत्वेन तद्गोचरेच्छासत्वेऽपीच्छार्थकसनन्तात्, न सन्प्रत्ययः, 'सनन्तान्न सनिष्यते' इत्यनुशिष्टेरतश्चिकीर्षिषतीत्यादिको न प्रयोगः । पापच्यते इत्यादौ यङः पौनः पुन्यमर्थः, तच्च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति तेन पाकोत्तरपाकानन्तर्य्यवत्पाककर्त्ता इत्येवं तत्र वाक्यार्थः । द्विः पक्तरि पुनः पक्तृत्वेऽपि न निरुक्तं पुनः-पुनः पक्तृत्वम्, अतो न तत्र पापच्यते इति प्रयोगः, पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम् । अतः पुमन्तरीयपाकाद्युत्तरत्वमादाय नातिप्रसङ्गः । तण्डुलं पापच्यते, इत्यादौ यङन्तधातूपस्थाप्ये सर्वत्रैव पाकादौ तण्डुलकर्मत्वस्यान्वयो व्युत्पत्तिवैचित्र्यात्, नातःक्रमेण मुद्गमाषौ पक्त्वा तण्डुलस्य पक्तरि तथाविधप्रयोगः । तुषेण पापच्यते इत्यादौ, कारकान्तरमप्येतेन व्याख्यातं । जंगम्यते, चंक्रम्यते, इत्यादौ, धात्वर्थगतं पौनः-पुन्यमिव कौटिल्यमपि यङोऽर्थः 'गत्यर्थात् कौटिल्य एव' तद्विधानात्, तेन पुनः पुनः कुटिलगतिमान् इत्येवं तत्र बोधः, शेषं पूर्ववत् । लोलुप्यते, चंचूर्य्यते, जंजप्यते, दंदश्यते, निजेगिल्यते, इत्यादौ निन्दितत्वमपि, तेन पुनः पुनर्गर्हितं लुम्पति चरतीत्यादिकस्तत्रार्थ । अत्रोत्सर्गत एव एकाचो हलादेरेव धातोर्यङ्प्रभृतेः 'ऋप्रभृतिभ्यश्चेति' विशेषविधेस्तु पुनः पुनरियर्त्ति, अश्नाति, अटतीत्याद्यर्थे अरार्य्यते, अशाश्यते अटाट्यते, इत्यादिकः प्रयोगः । 'शुभिरुचिभ्यां तु न स्यात् पुनः पुनः शोभते, रोचते इत्यर्थे शोशुभ्यते इत्यादेर्निराकांक्षत्वादिति वदन्ति ।

———

# तिङर्थविचारः

**तिङर्थविचारसारांशः**

'उच्चारित एव शब्दोऽर्थप्रत्यायको भवति, नानुच्चारितः' इति भाष्यात्; लोके तथैवानुभवाच्च लादेशानां तिङामर्थनिरूपणाय प्रकरणमिदं प्रारब्धम्। 'वर्तमाने लट्' इत्यादिविधायकानाम् 'लः कर्मणि' इत्यादिशक्तिग्राहकसूत्राणाञ्चादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः।

तत्र सङ्ख्याविशेषकालविशेषकारकविशेषभावा लादेशमात्रस्यार्थः। धातूनां फलव्यापारावर्थौ, तिङर्थाः कर्तृकर्मसङ्ख्याकालाः। तत्र सङ्ख्या कर्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये तु कर्मणि विशेषणम्। कालस्तु धात्वर्थव्यापारे विशेषणम्। फलव्यापारयोः फलं विशेषणम्, व्यापारः प्रधानम्।

इदमत्र रहस्यम्—'क्रियाप्रधानमाख्यातम्' इति निरुक्तात्, 'भूवादयोधातवः' इति सूत्रस्थक्रिया-प्राधान्यबोधकभाष्याच्च कर्त्राख्याते कर्माख्याते वा सर्वत्र पारमुख्यविशेष्यक इव बोधः। अत एव 'फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्' इति सङ्गच्छते।

एवञ्च 'ग्रामं गच्छति चैत्रः' इत्यत्र ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूल एकत्वावच्छिन्नचैत्राभिन्न-कर्तृको वर्तमानकालिको व्यापारः।

'ग्रामो गम्यते चैत्रेण' इत्यत्र तु चैत्राभिन्नकर्तृवृत्तिवर्तमानकालिक एकत्वावच्छिन्नग्रामा-भिन्नकर्मनिष्ठसंयोगानुकूलो व्यापार इति प्राचीनवैयाकरणाः।

नव्यास्तु—कर्त्राख्याते व्यापारमुख्यविशेष्यकः, कर्माख्याते तु फलमुख्यविशेष्यको बोधः। 'फले प्रधानं व्यापारः' इत्यादिना व्यापारस्य प्राधान्यबोधनं तु कर्त्राख्यताभिप्रायेण।

अथवा, तत्र प्रधानाप्रधानोभयपदच्छेदः। प्रधानं कर्तृप्रत्ययसमभिव्याहारतात्पर्यकम्; अप्रधानं तु कर्मप्रत्ययसमभिव्याहारतात्पर्यकमिति न काप्यनुपपत्तिः। अत एव 'सुप आत्मनः क्यच्' इति सूत्रस्थं भाष्यं सङ्गच्छते।

वर्तमानत्वादिकालो लडादिद्योत्यः, वाच्योऽपि। पक्षद्वयस्यापि भाष्यादावभिहितत्वात्, युक्तियुक्त-त्वाच्च। तथाहि—तत्तद्धातूनामेव वर्तमानोऽर्थः, लट् तु तद्द्योतकः।

न च बहूनां धातूनां तत्र शक्तिकल्पने शक्ततावच्छेदकनानात्वाद गौरवमिति वाच्यम्' व्यापार-सन्तानस्यैव कालत्वेनाभ्युपगमात् । तस्य च धात्वर्थत्वात् । कालस्य व्यापारसन्तानातिरिक्तत्वे प्रमाणाभावात् । तथा च तस्मिन् द्योत्ये लडादय इति 'वर्तमाने लट्' इति सूत्रार्थः । तस्माद् द्योतकत्वमेव लटः ।

एवं वाचकत्वमपि, 'वर्तमाने लट्' इति सूत्राद् वर्तमानकाले लड-विधानात्, व्यापारसन्तानस्य कालात्मकत्वाभावाच्च । तथा चोक्तं हरिणा—

'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' । इति ।

अनेन स्पष्टमेव क्रियापरिच्छेदकत्वं कालस्योक्तम् । नहि स्वपरिच्छेदकत्वं स्वस्य सम्भवति। तस्माद् वाचकत्वमेव लटः ।

नैयायिकास्तु—लकाराणां कृतौ शक्तिः, कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवात् । 'रथो गच्छति' इत्यादौ व्यापारे लक्षणा । शक्ततावच्छेदकञ्च लकारसाधारणं सत्त्वमेव । तिप्त्वादीनां शक्ततावच्छेदकत्वे गौरवम् ।

अयमत्र विशेषः—सत्त्वेन यत्ने शक्तिः, आत्मनेपदत्वेन च फले । अन्यूनानतिप्रसक्तस्य धर्मस्यैवावच्छेदकत्वनियमेनात्मनेपदत्वस्य तथात्वादित्याहुः ।

अथ धातुप्रकृतितिङां प्रसिद्धत्वादर्थौ निरूप्यते । तत्र कर्तृकर्मविहिततिङामाश्रयोऽर्थः । स च कर्त्तरि व्यापाराश्रयः कर्मणि फलाश्रयः । आश्रयत्वञ्चाखण्डोपाधिरूपं शक्यतावच्छेदकम् ।

न च तस्यासम्बन्धनिरूपकादिभेदभिन्नत्वाच्छक्यतावच्छेदकानन्त्यम्, समवायवदेकत्वेऽपि क्षत्यभावात् । आश्रयतात्त्वञ्चातिरिक्तं सकलाश्रयक्तानामनुगमकं बोध्यम् । न चाश्रयः प्रथमान्तपदेनैव लब्ध इति[1] न तत्र शक्तिकल्पना युक्ता, अनन्यलभ्यस्यैव शब्दार्थत्वादिति वाच्यम्, 'चैत्रः पचति' इत्यादौ चैत्रत्वादिना तल्लाभेऽपि पचिधात्वर्थव्यापाराश्रयत्वेन तदलाभात् ।

———

# यत्तु नैयायिकाः

न कर्तृकर्मणी वाच्ये, कृत्याश्रयादेः कर्त्रादित्वेन तत्र शक्तौ गौरवात् । किन्तु कर्तृलकारे कृतिः । न च धातुनैव सा लब्धा, 'पचति पाकं करोति' इति यत्नादेः पृथक्तया विव्रियमाणत्वेन तस्य धात्वशक्यत्वात् । न च घञादिसमभिव्याहृतधातोः फल एव शक्तिः । 'ग्रामो गमनवान्' इति प्रतीत्यापत्तेः, 'काष्ठैः पाकः' इत्यादौ तव कारकान्वयानापत्तेश्च, तव भावनायां कारकान्वयनियमात् । तस्माद् यत्नातिरिक्तव्यापार एव धातुशक्यः ।

ननु 'रथो गच्छति' इत्यादौ कृतेर्बाधात्, करोतेर्व्यापारसामान्यार्थकत्वाच्च धात्वर्थानुकूलव्यापार एवाख्यातार्थः । अत एव 'बीजादिनाङ्कुरः कृतः' इति व्यवहारः । 'पचति' इत्यस्य 'पाकं भावयति' इति व्यापारसामान्यार्थकभावयतिना विवरणम्, 'रथो गमनं करोति' इति विवरणं दृश्यते । कर्तृपदेनापि व्यापाराश्रय एवोच्यते । आख्यातार्थाश्रय इति मतन्तु न युक्तम्, आमन्ते कृति च दोषापत्तेः । कृतिरित्यादौ च कृञः कृतौ निरूढलक्षणा । तण्डुलक्रयणादेश्च न पाकाद्यनुकूलत्वम्, अनुकूलताविशेषस्यैव संसर्गत्वान्न 'पचति' इत्यादिप्रयोगरूपो दोषः । 'पचति' इत्यादौ यत्नानुभवस्तु यत्नाविनाभूतपाकादिक्रियाविशेषेण कारणस्य यत्नस्यानुमानात् । यत्ने वर्तमानत्वप्रतीतिरपि तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्तमानत्वानुमित्युपगमेन वोपपन्नतादृशवर्तमानत्वप्रतीतौ शाब्दत्वं तु सविवादमेव । वर्तमानत्वाद्यन्वयस्तु आख्यातार्थव्यापार एव, 'पचती, पाकयत्नवान्' इति तु तात्पर्यार्थविवरणमिति चेत्, न; व्यापारत्वापेक्षया यत्नत्वस्य जातिरूपत्वेन शक्यतावच्छेकत्वात् ।

करोतेरप्येवम्, वातरोगादिना कम्प्यमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारवत्यपि 'नाऽहं स्पन्दकं करोमि, अपि तु वातरोगेण मच्छरीरं कम्पते' इति प्रतीत्या करोतेर्यत्नार्थत्वस्यैवौचित्यात्, पटाङ्कुरयोः कृताकृतव्यवहाराच्च । बीजादिनाङ्कुरः कृत इत्यादावनुकूलव्यापारे कृञो लक्षणा । भावयतीति विवरणमपि कृताभिप्रायकमेव । न च कृञो यत्नार्थकत्वे यततेरिवाकर्मकतापत्तिः, शब्दशक्तिस्वभावात् ।

यद्वा, कृञ उत्पत्त्यनुकूला कृतिरर्थः, यततेर्हि कृतिरेवेत्यदोषः । न चैवमुत्पादयतीत्यस्योत्पत्तिं करोतीति विवरमसंगतं स्यात्, उत्पत्तेरुत्पत्त्यभावादिति वाच्यम्, तत्र व्यापारमात्रे लक्षणाङ्गीकारात् । न च यत्नत्वस्याख्यातवाच्यनिवृत्तिजीवनयोनियत्नसाधारणतया शक्यतावच्छेदकत्वासम्भव इति वाच्यम्, इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातिरेवाख्यातप्रवृत्तिनिमित्तत्वोपगमाददोषः । अत एवेश्वरकृतेर्जन्यमात्रजनकत्वेऽपि 'ईश्वरः' पचति, ईश्वरो भुङ्क्ते' इत्यादयो न प्रयोगाः । 'ईश्वरो वेदं वक्ति' इत्यादौ तु व्यापारे लक्षणा, तस्माद् यत्न एवाख्यातार्थः ।

अत एव 'चैत्र एव पचति, नाचेतनं काष्ठादि' इति स्वारसिको व्यवहारः । 'काष्ठानि पचन्ति' इति तु 'चैत्रः पचति' इतिवन्न स्वारसिकः प्रयोगः । न च 'करोति' इत्यादौ द्वेधा यत्नबोधापत्तिः, 'द्वौ' इत्यादिवदुपपत्तेः । 'रथो गच्छति' इत्यादौ च क्रियानुकूलव्यापारे लक्षणा । क्रियायाश्च सामानाधिकरण्यानुकूलत्वाभ्यां व्यापारेऽन्वयः, व्युत्पत्तिवैचित्र्यात् । अतो नान्यदीयगमनानुकूलतोदनादिलक्षणव्यापारवति 'गच्छति' इति प्रयोगः । अनुकूलताविशेषस्यैव वा सम्बन्धत्वान्नातिप्रसङ्गः ।

यदि तु 'निद्राति' इत्यादौ मित्थानाडीमनोयोगरूपनिद्रानुकूलव्यापाराप्रसिद्धिः, 'रथो गच्छति' इत्यादावपि तथाननुभवश्चेत्युच्यते, तर्हि 'जानाति, गच्छति, यतते, द्वेष्टि; करोति, निद्राति' इत्यादावश्रयत्वे लक्षणा ।

ननु धात्वर्थस्यैवाश्रयतासम्बन्धेन प्रथमान्तार्थेऽन्वयोऽस्तु, किं लक्षणया ? किञ्च, लक्षणापक्षे आश्रयत्वाय सम्बन्धस्याधिकस्य' जानाति' इत्यादौ मानस्वीकारेणगौरवम् । न च 'तण्डुलः पचति' इत्यादौ तण्डुलादेः कर्मतासम्बन्धेन पाकादावन्वयबोधवारणाय नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पत्त्या न तथा बोधसम्भव इति वाच्यम्, प्रातिपदिकार्थप्रकारकक्रियाबोधस्याव्युत्पन्नत्वेऽपि क्रियाप्रकारकप्रातिपदिकार्थविशेष्यकबोधस्याव्युत्पन्नत्वे मानाभावादिति चेत्, न; 'घटः करोति' इत्यादौ 'कृतिकर्मीभूतो घटः' इत्यन्वयबोधवारणाय क्रियाप्रकारकनामार्थबोधस्याप्यव्युत्पन्नत्वात् । सम्बन्धमानगौरवं तु न दोषावहम्, प्रामाणिकत्वात् ।

अस्तु वा तथा, वर्त्तमानत्वाद्यन्वयस्तु सर्वथेदृशे विषये धात्वर्थ एव, न त्वाश्रयत्वादौ । ज्ञानाद्यसत्त्वेऽपि स्वरूपसम्बन्धविशेषरूपस्यातिरिक्तस्य वाश्रयत्वादेः सम्बन्धेऽस्य सत्त्वे जानातीत्यादिप्रयोगापत्तेः । ज्ञानादिविशिष्टे आश्रयत्वादौ तदन्वये तु विशेषणज्ञानादावपि तदन्वयस्यावश्यकत्वेन तस्यैव स्वीकारौचित्यात् ।

न च यत्नस्याख्यातार्थत्वे 'कर्त्तरि लः' इत्याद्यनुशासनविरोधः, कृत्यभिधानेनैव प्रथमान्तार्थविशेषणतया कृत्यन्वयेन कृतिविशिष्टस्य कर्त्तुर्बोधनिर्वाहे लस्य तद्बोधकत्वाद् न तद्विरोधः लः

कर्मणि' इत्यत्र बोधकताया एव सप्तम्यर्थत्वात्, न तु वाचकता तदर्थः, गौरवेण विशिष्टधर्मिणि शक्तेर्बाधात्। न च "चैत्रः पचति' इत्यादौ भिन्नाभ्यां रूपाभ्यामेकधर्मिबोधकत्वलक्षणसामानाधिकरण्यानुभव-विरोध इति वाच्यम्। तथाननुभवात्, तादात्म्यानन्तर्भावेण स्वार्थान्वितार्थबोधकत्वस्यैव सामानाधिकरण्यस्य प्रतीतेः।

अस्तु वा तथा सामानाधिकरण्यंलक्षणया, शक्तिस्तु लाघवाद् यत्न एव, अत एव 'युष्मद्युपपदे समानाधिकरणे' (१।४।१०५) इत्यादीनां नानुपपत्तिः। अत एव च 'किं करोति' इति प्रश्ने 'पचति' इत्येवोत्तरे दत्ते देवदत्तादिपदाभावेऽपि मनसोपस्थिते कर्त्तरि नैकत्वसंशयः, लक्षणयोपस्थिते धर्मिणि सङ्ख्यान्वयेनादोषात्।

'पचति' इत्यादौ कालान्वयस्तु कृतावेव, न तु धात्वर्थे, यत्नशून्येऽपि पुरुषे तदधीनाग्निसंयोगादि-रूपपच्याद्यर्थस्य विद्यमानत्वे 'अयं न पचति' इति प्रयोगात्, 'अयं पचति' इत्युक्ते इदानीमयं पाकयत्नवान्न वेति संशयनिवृत्तेश्च। जानातीत्यादौ धात्वर्थ एव तदन्वयध्रौव्यात्। पचतीत्यादावपि तथैव, यत्ननिवृत्तौ पाकानुवृत्तौ 'अयं न पचति' इति तु न भवत्येव पचतीत्यस्यैव दर्शनाच्च।

एवञ्च कालान्वये नानाकार्यकारणभावकल्पनापि न। इदानीमयं पाकयत्नवान्न वेति संशय-निवृत्तिस्तु तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्त्तमानत्वानुमित्यभ्युपगमेनोपपन्नेत्यन्ये।

नश्यतीत्यादावुत्पत्तिरपि धात्वर्थः, आख्यातार्थो वा इति तत्रैव कालान्वयः। अतो ध्वंसस्य नित्यत्वेऽपि न सर्वदा नश्यतीति प्रयोगः।

यद्वा, उत्पत्तिमदभाव स्यैव नाशपदार्थत्वेन तदेकदेशोत्पत्तौ तदन्वयः। 'अनभिहिते कर्त्तरि तृतीया' इत्यादेश्चानभिहितायां कृतावित्यर्थः। कृतिश्चाश्रयत्वादीनामुपलक्षणम्, कर्तृधर्मेऽनभिहिते इति यावदिति केचित्। तत् न; लकारसामान्यस्यैव कर्तृत्वे शक्तत्वेन 'पच्यते तण्डुलः चैत्रेण' इत्यादावपि तृतीयानापत्तेः। 'किं क्रियते देवदत्तेन' इति प्रश्ने 'पच्यते' इत्युत्तरेण कर्तृपदासमभिव्याहृते 'पच्यते तण्डुलः' इत्यादौ 'फलजनकस्पन्दो वर्त्तमानकृतिजन्यो न वा' इति सन्देहानुदयेन च 'चैत्रेण पच्यते' इत्यस्य 'चैत्रेण पक्वः क्रियते' इति विवरणेन चाख्यातमात्रस्य कर्तृत्वशक्तताया आवश्यकत्वात्। न च कर्तृत्वविशेष्यतया प्रातिपदिकार्थेऽविवक्षिते सति तृतीया, कर्मत्वविशेष्यतया प्रातिपदिकार्थे विवक्षिते सति द्वितीया इत्याद्यर्थः। अत एव सूत्रे धर्मिनिर्देशश्चरितार्थः, अतो न दोष इति वाच्यम्। चैत्रमैत्रोभयकर्तृकपाकस्थले चैत्रकर्तृकपाक-कर्त्ता मैत्र इत्यन्वयतात्पर्येण 'चैत्रेण पचति मैत्रः, चैत्रेण पक्ववान् मैत्रः' इत्यादेरप्यापत्तेः।

न चाश्रयातिरिक्ताविशेषणतापन्नं यत् कर्तृपदम्' तद्विशेषणतानापन्नक्रियायां विशेषणतया प्रातिपदिकार्थविशेष्यकर्तृत्वान्वयविवक्षायां तदुत्तरं तृतीयेति सूत्रार्थः। 'चैत्रेण पाचयति मैत्रः' इत्यादौ ण्यर्थकर्तृत्वविशेषणतापन्नेति।

तच्चाख्यातार्थाश्रयत्वे विशेषणम् । तस्य चाश्रयातिरिक्तत्वं स्पष्टमेव । कृतिविशेष्यकबोधाभिप्रायेण 'चैत्रेण पचति' इत्येतद्वारणायाश्रयविशेषणत्वमुपेक्ष्याश्रयातिरिक्ताविशेषणत्वं निवेशितमिति वाच्यम्, सूत्राक्षरैस्तादृशार्थालाभात् । पाचयतीत्यादौ तिप आश्रये लक्षणाग्रहवत् पुरुषीय 'चैत्रेण पाचयति मैत्रः' इति प्रयोगे तृतीयाया असाधुत्वापत्तेश्च ।

तस्मात् 'अनभिहिते' इत्यादेरनभिहितसङ्ख्याके इत्यर्थः । न च 'चैत्रेण दृष्टो घटः, घटं दृष्टवान् चैत्रः' इत्यादौ विनापि तिङं सङ्ख्याके इत्यर्थः । न च 'चैत्रेण दृष्टो सुपैव सङ्ख्योपस्थितिसम्भवे तिङां न तदभिधायकत्वम् । एवञ्च 'चैत्रः पचति' इत्यादावपि तृतीयापत्तिरिति वाच्यम्, 'चैत्रो मैत्रश्च गच्छतः' इत्यादौ विनापि द्वित्वादिबोधकसुपं द्वित्वादिप्रत्ययात् । न चैकत्वधर्मितावच्छेदकद्वित्वादिबोधः कुतः, एकत्वद्वयावच्छेदेन द्वित्वबोधासम्भवात् । न च सुबैकवचनस्यैव द्वित्वादौ लक्षणास्तु, सुपः प्रकृत्यर्थगतसङ्ख्याबोधकत्वेन चैत्रद्वयमैत्रद्वयबोधापत्तेः ।

ननु कृता सङ्ख्यानभिधानात् तत्र दोष इति चेत्, न; तत्र कर्तृकर्माभिधानानभिधानाभ्यामेव व्यवस्थासम्भवात् । अन्यतरानभिधाने तृतीयेति सूत्रार्थः । कर्मलकारे कृतिर्न वाच्येति मते तु कृत्यनभिधानमेव कर्तुरनभिधानम् । न च सङ्ख्याभिधानानभिधानाभ्यामेवोक्तानुक्तविभागे सङ्ख्यायाः कर्तृकर्मसाधारण्येनान्वये बाधकाभावेन कर्तृलकारादौ कर्मादावपि द्वितीयाद्यापत्तिरिति वाच्यम्, एकपदोपात्तत्वेन भावनाविशेष्ये सङ्ख्यान्वयनियमस्वीकारेणादोषात् ।

भावनायाश्चेतरविशेषणीभूतप्रथमान्तपदोपस्थाप्येऽन्वयः, तथैवाकाङ्क्षितत्वात् । भावनापदेन सङ्ख्याकालातिरिक्त आख्यातबोध्यो गृह्यते । तेन जानातीत्यादीनां सङ्ग्रहः । 'नारायण इव नरो हन्ति, चन्द्र इव मुखं दृश्यते' इत्यत्र नारायणे चन्द्रे च सङ्ख्यान्वयवारणायेतराविशेषणेति ।

वस्तुतः 'घटो नित्यः' इत्यादितोऽबोधकादितरविशेषणत्वेनोपस्थितेः शब्दमात्रप्रतिबन्धकत्वाद‌त्र विशिष्यतदनिवेशेऽपि क्षत्यभावः । एवञ्च कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलितः ।

एवञ्च 'न पचति' इत्यत्र भावनान्वयिन्येव कर्त्तरि तदन्वयेऽपि न दोषः । भावना हि तत्र नञर्थान्वयिनी । 'चैत्रेण सुप्यते' इत्यत्र चैत्रनिष्ठः स्वाप इति बोधात् विशेष्ये स्वापे तद्वारणाय प्रथमान्तेति । अत एव तत्र भावलकारे प्रथमान्तपदजन्योपस्थित्यभावादनन्वितैव सङ्ख्या । अत एव तत्रौत्सर्गिकमेकवचनमेव ।

किञ्च, तथापि कुत्र कर्त्ता वाच्यः, कुत्र कर्मेत्यत्र विनिगमनाविरहाच्छबादिकं तात्पर्यं वा नियामकं वाच्यम् । तथा च ममापि कुत्र सङ्ख्यान्वय इत्यत्र कुत्र कृतिरेव वाच्या, कुत्र फलमपि, इत्यत्र

न तदेव नियामकमिति काप्यनुपपत्तिः। 'मैत्रेण पच्यते तण्डुलः' इत्यत्र मैत्रनिष्ठभावनाविषयपाकजन्यफलशाली तण्डुल इति बोधः।

कृतिः फलञ्चाख्यातार्थः। तत्र कृतिर्धात्वर्थविशेषणम्, फलं विशेष्यम्, निष्ठत्वं तृतीयार्थः, संसर्गो वा, सङ्ख्यामात्रं तृतीयार्थः, भावनापदेन सङ्ख्याकालातिरिक्त आख्यातार्थ उच्यते। अत एव भावनाविशेष्ये सङ्ख्यान्वयस्य न भङ्गः। 'रथेन गम्यते ग्रामः' इत्यत्र रथनिष्ठगमनानुकूलव्यापारजन्यफलशालीति बोधः। अत्र निष्ठत्वं तृतीयार्थः। तस्य धात्वर्थे गमनेऽन्वयः। न च फलमपि संसर्गेण गमने, नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पत्तेः।

यद्वा, तेन संसर्गेण रथस्याख्यतार्थभावनायामेवान्वयः। न च फलमपि संसर्गोऽस्तु, किं तत्रात्मनेपदस्य शक्तिकल्पनया, तस्य प्रकारतया भानानुभवात्। न च फलावच्छिन्नव्यापारस्य धात्वार्थत्वाद् धातुनैव तल्लाभः, विशेषणविशेष्यभाववैपरीत्यस्याशक्यत्वेन क्रियाजन्यफलालाभात्, यद्रूपविशिष्टे शक्तिः तद्रूपविशिष्टस्यैव पदेनोपस्थितेः। तस्माद् व्यापार एव धात्वर्थः, फलं त्वात्मनेपदार्थः, कृतिश्चेति।

ननु कृतेरपि तत्राख्यातार्थत्व आख्यातोपस्थापितभावनायाः क्रियाविषयायाः फलेऽन्वय, उत भावनाविशेष्यक्रियायाः फलेऽन्वयः। नाद्यः, फलस्य क्रियाजन्यफलशालित्वरूपकर्मत्वप्रकारकप्रतीतिविरोधः। अन्त्ये, तिङुपस्थाप्यभावनायां क्रियाया विशेषणत्वेनान्यत्र क्लृप्तान्वयो भज्येत, किन्तु तृतीयार्थ एव। 'चैत्रेण पक्वः' इत्याद्यनुरोधेन सुबर्थकृतेः क्रियायां विशेषणत्वेनैवान्वयव्युत्पत्तेर्द्वितीयप्रकारेणेवान्वयबोधः। 'ग्रामं गच्छति' इत्यादौ तु फलं द्वितीयार्थः।

वस्तुतस्तु प्रागुक्तानुपपत्त्या कृतेरप्यत्राख्यतार्थत्वाभाव। व्युत्पत्त्यन्ततरमेवात्र कल्प्यमिति प्राञ्चः।

केचित् तु, धात्वर्थनिरूपणोक्तयुक्तिभिस्तत्फलावच्छिन्नव्यापारवाचितैव धातोः। न च धात्वर्थविशेषणत्वेनोपस्थितफलस्य कर्मण्यन्वयाव्युत्पत्तेरात्मनेपदार्थफलस्यान्वयो वाच्यः, तस्य च सामान्यरूपेण विशेषरूपेण वा फलसामान्यवाचकत्वात्।

एवञ्च 'गम्यते ग्रामः' इत्यादौ नियमतः संयोगादिरूपफलशालित्वं ग्रामादेर्न प्रतीयेतेति। वाच्यम्, संयोगाद्यवच्छिन्नव्यापारशक्तगम्यादिसमभिव्याहारादेव सामान्यफलशक्तस्याप्यत्मनेपदस्य संयोगादिरूपफलमात्रबोधकताङ्गीकारेणादोषात्। न च विशेषरूपेण फलसामान्यबोधकत्वे शक्त्यानन्त्यम्, इष्टापत्तेः। तदादिवद् बुद्धिस्थत्वेन शक्यतावच्छेदकानुगमेन वा न शक्त्यानन्त्यम्।

एवञ्च 'गम्यते ग्रामः' इत्यत्र संयोगावच्छिन्नव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः। 'ग्रामं गच्छति' इत्यादौ द्वितीयार्थश्चाधेयत्वं व्युत्पत्तिवैचित्र्याद् धात्वर्थतावच्छेदकेऽपि फलेऽन्वेति। एकदेशान्वया-

स्वीकारे तु तत्रापि फलमेव द्वितीयार्थः। ग्रामनिष्ठसंयोगाजनकसंयोगावच्छिन्नक्रियानुकूलकृतिमानिति बोध इति वदन्ति।

अत्र पक्षेऽपि संयोगस्य द्वेधाभानमनुभवविरुद्धमिति द्वितीयात्मनेपदयोर्न फलमर्थः, किन्तु धातोरेव, फलव्यापारो पृथक् शक्यौ। एवं च द्वितीयाया आधेयत्वं कर्माख्यातस्याश्रयत्वम्, फलं तु कर्तृप्रत्ययसमभिव्याहारे धात्वर्थे व्यापारे विशेषणम्। कर्माख्यातसमभिव्याहारे तु यगात्मनेपदादिरूपतात्पर्यग्राहकवशाद् विशेष्यमित्येव साम्प्रतम्। इदमत्राकूलम्—

यथा तद्यदित्यादिशब्दानां घटत्वपटत्वादिरूपेण नानार्थशक्ततया नानार्थकत्ववारणाय स्वीयविषयतावच्छेदकत्वसम्बन्धेन पचादिधातुप्रयोक्तृसमवेतबुद्धिविशेषोपलक्षिता ये फूत्कारत्वादयो धर्माः, तदवच्छिन्नशक्यतानिरुपितशक्ततावत्त्वस्य पचादौ स्वीकारात्।

अननुगतनानाधर्मावच्छिन्नशक्यतानिरूपितशक्ततावत्त्वस्येव नानार्थकत्वेन प्रकृते बुद्धिविशेषस्यानुगमकस्य सत्त्वेन नानार्थकत्वाभावः।

'देवदत्तेन ज्ञायते' इत्यादौ विषयत्वं कर्मप्रत्ययार्थः, तृतीयार्थ आधेयत्वम्। 'क्रियते घटः' इत्यादौ साध्यतया कृतिविषयत्वमेव कर्मप्रत्ययार्थः। अतः 'आकाशं करोति' इत्यादयो न प्रयोगाः।

नन्वेवं कृतामपि कर्तृकर्मणोः शक्तिर्न सिध्येत्, कृत्याश्रयत्वादावेव शक्तेरुचितत्वात्। अव्ययनिपातार्थवत् प्रत्ययस्यापि भेदेनान्वयानुभावकत्वान्न नामार्थयोरभेदान्वयव्युत्पत्तिविरोध इति चेत्, न;

चैत्रो गन्ता गतो ग्रामः, [मित्रा पवत्रो, गतं पुरम्।
भोक्ता तृप्यति, पक्वानि भुङ्क्ते, पक्ताऽपसार्यताम्॥

इत्यादौ पुंल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गगत्वनियमदर्शनेन पूर्वापरोपात्तानामभेदान्वय एव साधुत्वोपगमेन तस्य धर्मिशक्तिं विनानुपपत्तेः, भोजनानुकूलकृतौ क्लृप्त्या प्रयत्वस्य भोजने पाकफलविक्लित्त्यादिकर्मकत्वस्य बाधाच्च। तस्मात् कर्तृविहितकृतां कर्तरि, कर्मविहितानां तु कर्मणि शक्तिः, चैत्रस्य नप्ता इत्यादाविव पदार्थतावच्छेदककृत्यादौ धात्वर्थान्वयः।

यद्वा, पक्तेत्यादौ स्वानुकूलकृत्याश्रयत्वसम्बन्धेन पाकादेः कर्त्रादावेवान्वयः। कर्तृत्वकर्मत्वाद्यनभिधाने तृतीयाद्वितीयादय इति न दोषः, कृता विशिष्टस्याप्यनभिधानात्।

ननु कृतामपि धर्मवाचकत्वमेवास्तु, विशिष्टे तु लक्षणास्तु। 'भोक्ता तृप्यति' इत्यादौ सामानाधिकरण्यानुभवानुरोधात्, 'चैत्रो गन्ता' इत्यादावपीति चेत्, न; विशिष्टशक्त्युच्छेदापत्तेः, सर्वत्रैव धर्मे शक्तिः,

विशिष्टे लक्षणेत्यस्य वक्तुं शक्यत्वात् । शक्ततावच्छेदकञ्च श्रूयमाणतिप्त्वादिकमेव, न तु सकलसाधारण-तिङ्त्वम्, तस्य दुर्वचत्वात् । न च पाणिनीयसङ्केतविशेषसम्बन्धेन तिङ्पदवत्त्वं तत्, 'आदिरन्त्येन' (१।१।७१) इत्येतच्च संकेतग्राहकमिति वाच्यम्, तदविदुषामपि बोधात् ।

किञ्चैवं घटादिवाचकघटादिपदेष्वपि कस्यचिच्छब्दस्य पुरुषविशेषीयसङ्केतसम्भवेन तुल्ययुक्त्या तत्रापि तच्छब्दस्यैव शक्ततावच्छेदकत्वापत्तेः । तिबादिषु पाणिनेस्तिङ्पदसङ्केतवत् पुरुषान्तरीयशब्दान्तरसङ्केतस्यापि सम्भवेन तत्तच्छब्दानामपि प्रवृत्तिनिमित्ततापत्तौ विनिगमनाविरहाच्च ।

एतेन सङ्केतविशेषसम्बन्धेनाख्यातपदवत्त्वादिरूपमाख्यातत्वादिशक्ततावच्छेदकमित्यपास्तम् । नापि लत्वम्, तदजानतोऽपि बोधात् ।

किञ्च, तस्य वाचकत्वे शब्राद्यनुरोधेन लस्य नानार्थतापत्तिः ।

किञ्च, स्मारकतावच्छेदकशक्ततावच्छेदकोभयकल्पनापेक्षया शक्ततावच्छेदकस्यैव कल्पने लाघवेन 'पपाच' इत्यादावनेकेषां स्मारकतापत्त्या च स्थानिनामनियतत्वेन चाव्यवहृतत्वेनादेशानां वाचकत्वेऽस्यैव युक्तत्वम् । अत एवैधामित्यादावामन्तेनैव कर्तृबोधः ।

न च 'हरेऽव' इत्यादौ पूर्वरूपादिस्थले परलोपादिविधानाद् व्याकरणानां कलहे कियान् सम्बोधन-विषयार्थस्य क्रियान् क्रियाया इत्यर्थस्य, वस्नसादौ क्रियान् द्रव्यवाचकः, कियांश्च कर्मत्वादेरित्यर्थस्य च नियन्तुमशक्यत्वेन प्रथमव्युत्पत्तेः समुदाय एव सत्वेन च पदे वाक्ये च शक्तिकल्पनापत्तौ वाक्यपदस्फोटा-पत्तिरिति वाच्यम्, प्रत्येकं पदानामवधृतशक्तिकानां समुदायेन यथा व्युत्पत्तिस्मृतानां तत्तदर्थोपस्थापनद्वारा वाक्यार्थबोधकत्वसम्भवान्न तदापत्तिः । लस्य तु न क्वापि शक्तिरवधृतेति न दोष इति वदन्ति । अत्राहुः—

लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्यापि गुरुणि स्वीकारे बाधकाभावः, न च कारणतावच्छेदकत्ववत् शक्यतावच्छेदकत्वं स्वरूपसम्बन्धविशेषः, तच्च सम्भवति 'लघौ गुरौ' न कल्प्यते । लक्ष्यतावच्छेदकत्वं तु न तथेति वाच्यम्, वैषम्ये बीजाभावात् ।

किञ्च, स्वरूपसम्बन्धो यदि तत्तत्स्वरूपम्, तदा गुरुधर्माणामपि सत्त्वात् कानुपपत्तिः, अतिरिक्तत्वे लक्ष्यतावच्छेदकस्यापि गुरौ कथं कल्पनम् ?

किञ्च, गुरुधर्मेऽवच्छेदकत्वाभावकल्पनापेक्षया अन्यत्र कल्प्यमानावच्छेदकत्वीयसम्बन्धस्यैव कल्पना युक्ता, भावकल्पनायां लाघवात् ।

किञ्च, अवच्छेदकत्वं न स्वरूपसम्बन्धः, नाप्यतिरिक्तम्, मानाभावात् । किन्त्वन्यूनानतिरिक्त-वृत्तित्वमेव । तच्च गुरुण्यपि । एवं कारणतावच्छेदकत्वप्रतियोगितावच्छेदकत्वादीत्यन्यत्र विस्तरः ।

एवञ्चावच्छेदकलाघवगौरवचिन्ताऽयुक्ता ।

किञ्च, यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादः, तत्रैव लघुरूपावच्छिन्ने शक्तिः, गुर्वच्छिन्ने लक्षणा। प्रकृते च कृतित्वेनाख्याताद् बोधः सविवादः । कत्रु पस्थितिकार्यकारणभावस्य त्वयाप्यवश्यकत्वात् सर्वत्र तथानङ्गीकारेण तत्तद्वाक्यीयत्वनिवेशेनालन्तगौरवञ्च । सङ्ख्याभावनान्वयकार्यकारणभावे कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थत्वेन निवेशेऽधिकगौरवञ्च ।

किञ्च, आख्यातेन क्वचित् कृतेः, क्वचिदाश्रयत्वस्य बोधः कृतेः क्वचिद् धातुना, क्वचित् प्रत्ययेन बोध इत्यर्थस्य पर्यवसितत्वेन तव मतेऽनेकक्लिष्टकार्यकारणभावापत्तिः, तत्तद्व्युत्पत्त्यनुसारेण तथा कार्यकारणभावानां सर्वेषाभावश्यकत्वेन तल्लाघवगौरवविचारस्यायुक्तत्वाच्च ।

किञ्च, 'युष्मद्युपपदे' (१।१।१०५) इत्यादौ समानाधिकरणे इत्युक्ते ऋष्यनुभवसिद्धसामानाधिकरण्यस्य त्वन्मतेऽनुपपत्तिः। न च तिङर्थसङ्ख्यान्वयिवाचकत्वमेव तत्र सामानाधिकरण्यम्, तादृशस्य सामानाधिकरण्यपदेनाव्यवहारात् । न च लक्षणया सामानाधिकरण्यम्, शक्तेरेवोचितत्वात् । अन्यथा विशिष्टशक्त्युच्छेदः, कृतिमात्रबोधस्य क्वाप्यभावात् । यदि तु पचतीत्येतावन्मात्रोक्तौ तन्मात्रबोध इत्युच्यते, तर्हि तदुक्तौ कर्त्तरि एकत्वसंशयापत्तिः, पक्ता जात इत्यादौ कृत्यपि कृतिमात्राभिप्रायेण प्रयोगस्य वक्तुं शक्यत्वात् तिङ्कृतौ वैषम्यं दुरुपपादञ्च ।

किञ्च, कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावे व्यभिचारः। कार्यकारणभावान्तरकल्पने तु गौरवम् ।

किञ्च, विधेयस्योद्देश्यकोटौ प्रवेशानौचित्येन त्वदुक्तार्थोनुचितः, कर्त्रादौ युष्मत्समानाधिकरणे यो लः, तस्य स्थाने मध्यम इत्यर्थस्यैवोचितत्वम् ।

किञ्च, संख्यान्वयनियमोऽपि दुरुपपादः। न च शबादिकं तात्पर्यग्राहकम्, कर्त्रर्थे सार्वधातुके शबित्याद्यर्थस्य सत्त्वेन तेषां सङ्ख्यान्वये तात्पर्यग्राहकत्वस्य निरूपयितुमशक्यत्वात्, यद्यपि 'अनभिहिते' इत्यस्यानभिहितसङ्ख्याक इत्यर्थ इति। तदपि न; देवदत्तः पक्तेत्यादौ तृतीयापत्तिः ।

अपि च, तिङ्विधौ द्व्येकयोरित्यादेरुपस्थितस्य किं लकारार्थस्यैकत्वादावित्यर्थः, उत तिङ्पात्तार्थान्वयिगतैकत्वादावित्याद्यर्थः ? आद्ये सिद्धं न इष्टम्। अन्त्ये तु देवदत्तादिपदोत्तरसुपैव तस्योक्तत्वेन तत्र तिङ्विधानानुपपत्तिः ।

किञ्च, तव मते पचति, ज्ञातेत्यादौ नानारूपं कर्तृत्वं वाच्यम्। मम तु सर्वत्रैकरूपमेव तत् ।

किञ्च, तव लविधौ कर्तृग्रहणस्य नानार्थतापत्तिः, तृतीयादिविधावपि क्वचित् कृतौ, क्वचिदाश्रयत्व इत्याद्यर्थे वैरूप्यम्। न च कृतौ तृतीयेत्यादिरेव सूत्रार्थः। 'रथेन गम्यते' इत्यादावनुपपत्या तृतीयादीनां लक्षणेति वाच्यम्, सुब्विभक्तौ न लक्षणेति त्वसिद्धान्तात्, अर्थनिर्देशस्य व्यर्थत्वापत्तेश्च, अन्यार्थेऽसाधुत्वबोधनं हि तत्फलम्, त्वद्रीत्या लक्षणया सर्वत्र साधुत्वस्येष्टत्वात्, अनुशासनवैयर्थ्यापत्तेश्च।

किञ्च, कूलं पिपतिषति इत्यादावचेतने चेतनत्वारोपवद् रथादावपि चेतनत्वारोपेण तिङादीनां कृत्यर्थकत्वोपपत्तौ लक्षणाश्रयणं व्यर्थम्। न च व्याकरणस्मृतेः साधुत्वमात्रे तात्पर्येणार्थव्यवस्थापकत्वान्न दोषः इति वाच्यम्, अर्थविशेषपुरस्कारेणैव साधुत्वस्य वक्तव्यत्वेन ऋष्यनुभवानुरूढार्थानुवादबलेन तादृशार्थ एव साधुत्वस्यौचित्यात्। अत एव पचतीत्युक्ते कः कीदृश इति प्रश्नः, पण्डितो घनश्याम इत्युत्तरञ्च सङ्गच्छते। अन्यथा कर्त्तुरनुपस्थितौ क इति विशेषजिज्ञासानुपपत्तिः।

किं चैवं कृतामपि कर्तृवाचकत्वानापत्तिः। न च चैत्रो गन्तेत्यादौ समानाधिकरणप्रतिपादिकार्थयोरभेदान्वयव्युत्पत्तेर्भेदेनान्वये चैकपदोत्तारविरुद्धविभक्तिमत्पदजन्योपस्थितेर्हेतुत्वाच्च भेदेनान्वयासम्भवेनाभेदान्वयो वाच्यः, स च कर्तुर्वाच्यतां विनाऽनुपपन्न इति वाच्यम्, राज्ञः सुतस्य धनमित्यादौ सति तात्पर्ये उभयविधबोधस्यापि दर्शनेन कार्यकारणभावद्वयस्यापि व्यभिचरितत्वात् तथा बोधे तात्पर्यज्ञानहेतुतयैव निर्वाहस्यावश्यकत्वेन चैत्रो गच्छतीत्यादाविव कृतेराश्रयतया चैत्रेऽन्वयेनाक्षतेः। न चैवमपि मित्रा पक्त्रीति लिङ्गसामानाधिकरण्यात् कृति कर्त्ता वाच्यः, ईदृशानां धर्मवाचकत्वेऽपि शुक्लादिपदानामिव विशेष्यनिघ्नत्वस्य वक्तुं शक्यतया वस्त्वव्यवस्थापकत्वात्।

किञ्च समानाधिकरणविशेषणस्य विशेष्यसमानलिङ्गत्ववत् तादृशविशेषणस्य विशेष्यसमानसङ्ख्यत्वनियमादाख्यातस्यापि धर्मिवाचकत्वमावश्यकम्। अन्यथा देवदत्ताः पचतीत्यादेरप्यापत्तेः। चैत्रो मैत्रश्च सुन्दरावित्यादौ व्यभिचारान्न तथा नियम इति चेत्, 'क्षुत्प्रहन्तुं शक्यम्' इत्यादौ व्यभिचारेण त्वदुक्तनियमस्याप्यभावात्। न च केवलकृतौ प्रयोगाभावः, आख्यातेऽपि समत्वात्, कृत्याश्रयस्यात्मनो जननासम्भवेन पाचको जात इत्यादेः सत्त्वाच्च। न च कृति कृतेरेव वाच्यत्वे चैत्रे गन्तेत्याद्यापत्तिः, चैत्रे गच्छतीत्यस्याप्यापत्तेः। यद्यप्याख्यातार्थस्य प्रथमान्तपदोपस्थाप्य एवान्वयः। तथापि कृतेर्विषयतया काष्ठादावन्वयविवक्षायां चैत्रे पचति काष्ठमित्यादेर्दुर्वारत्वम्, भोक्ता तृप्यतीत्यादौ तु कृतः कर्त्तरि लक्षणास्तु तस्मादभेदान्वयानुभव एव कृत्सु कर्तृशक्तौ प्रमाणं वाच्यः, विशिष्टशक्त्युच्छेदापत्तिश्च।

एवं च 'पचति कल्पं देवदत्तः, इत्यादावभेदान्वयदर्शनात् त्वद्रीत्या युक्तत्वाच्च चैत्रः पचतीत्यादावन्वयानुभवाच्च विशिष्टशक्त्युच्छेदापत्तेश्चाख्यातस्यापि कर्तृवाचकत्वसिद्धिः।

यत्तु नामार्थयोरित्यत्र नामत्वं न वैयाकरणपरिभाषितम्, किन्तु सुपः पूर्ववृत्तित्वे सत्यर्थवत्त्वम्। एवञ्च तिबुत्तरं सुबभावान्न दोष इति, तत्, न; आमन्तौत्तरं सुपः सत्त्वेन पाचयामासेत्यादौ कृते भेदेन सम्बन्धेनान्वयानापत्तेः आमन्तोत्तरलिटो धर्मिवाचकत्वे आमन्ततिङन्तयोरभेदान्वयो दुर्लभः।

किञ्चैवंविधनामग्रहणे छत्रीत्यादौ प्रकृतिप्रत्ययार्थयोरभेदान्वयापत्तिः, अनुशासनबलादेवार्थान्वययोर्निर्णये तु सिद्धं न इष्टम्। न च कल्पबादीनां कर्त्तरि लक्षणा, पाचक इत्यादावपि सुपां लक्षणयैवोपपत्तेः। आचार्यकल्पावित्यादिवत् कर्तृद्वित्वादिविवक्षायां पचति कल्पमित्यादवपि द्विवचनाद्यापत्तिः, अनुशासनबोधितार्थे स्वेच्छामात्रेण लक्षणायामसाधुतापत्तेश्च।

किञ्च, तत्र कर्त्तरि लक्षणायां पक्ता गच्छतीतिवत् पचति कल्पं गच्छतीत्यस्यापत्तिः।

यद्यपि कर्माख्याते फलमात्मनेपदार्थं इति। तत्र धात्वर्थ एव विशेषणविशेष्यभावव्यत्यासमात्रेणोपपत्तौ पृथक् प्रत्ययस्य शक्तिकल्पने गौरवात्। तत्र तात्पर्यग्राहकमात्मनेपदं यगादि चास्तु।

किञ्च, नव्यनैयायिकनये तत्र कृतेराख्यातार्थत्वाभावेन तृतीयान्तासमभिव्याहृत 'किं क्रियते' इति प्रश्ने पच्यत इत्युत्तरानापत्तेः, कृञस्तव यत्नार्थकत्वात्। न च तत्र कृतिरप्याख्यातार्थः। तस्यां धात्वर्थविशेष्यतायाः क्लृप्तत्वेनानन्वयापत्तेः।

किञ्च, कृत्यभिधानेनैवाभिधानव्यवस्थाङ्गीकारेण कर्त्तरि तृतीयानापत्तिः। कृतेर्धात्वर्थत्वे तु सिद्धं न इष्टम्।

किञ्च, प्राचीननये करोतीत्यादौ कालान्वयस्य धात्वर्थेऽङ्गीकारेण पचतीत्यादौ चाख्यतार्थे तदन्वयेन वैषम्यापत्तिः। मम तु सर्वत्र धात्वर्थे एवान्वय इति न दोषः।

एतेन कालस्य धात्वर्थेऽन्वयात् पदद्वयघटितः कार्यकारणभावस्तव, अस्माकन्त्वाख्यातार्थ एवेति लाघवमित्यपास्तम्। 'भूतं पक्वं जानाति' इत्यादौ कालान्वयाय तस्य तवाप्यावश्यकत्वाच्च।

किञ्च, कृतौ कालान्वये पाकशालायां काष्ठज्वलनाद्यनुकूलं व्यापारं कृत्वा पच्यमानमोदनं पश्यति निर्व्यापारतया तिष्ठति देवदत्ते पचतीत्यनापत्तिः। मम तु पाक्यवस्तुनिष्ठविक्लित्त्यनुकूलव्यापाराधिकरणवृत्तित्वविशिष्टपाकशालावस्थानरूपव्यापारस्य धात्वर्थस्य विद्यमानत्वान्न दोष इति दिक्।

मीमांसकास्तु, फलावच्छिन्नव्यापाररूपधात्वर्थानुकूलो व्यापारः, कृत्यादिरूप आख्यातार्थः। स च व्यापारत्वेनैव। एवञ्च जानातीत्यादौ न लक्षणा। कृत्यादिव्यापारस्तु नैयायिकोक्तयुक्तिजालैर्विशेष्यत्वानुरोधेन च तिङ एव वाच्यः। कालान्वयस्तु धात्वर्थव्यापारे, आख्यातार्थेऽपि वा। धात्वर्थव्यापाराश्रयत्वमेव

कर्तृत्वम्, तदर्थफलाश्रयत्वं च कर्मत्वम् । 'अनभिहिते' इत्यस्यांबोधिते कर्त्रादावित्यर्थः, बोधश्च शक्त्या, आक्षेपाद्, वा लक्षणया वा । तत्र कृति शक्त्या, तिङि भावनयाक्षेपेण लक्षणया वा ।

मीमांसकमते आक्षेपः = अर्थापत्तिः, येन विना यदनुपपन्नम्, तेन तत् कल्प्यते । यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र भोजनं विनानुपपन्नेन योगाभ्यासाद्यजन्यपुष्टत्वेन भोजनं कल्प्यते । तस्य दिवा बाधे रात्रिभोजने पर्यवसानं भवति । एवं प्रकृते भावनायाः कर्तारं विनानुपपत्त्या सा कर्तृरूपमाश्रयं कल्पयति । तथा चानुपपत्तिज्ञानमर्थापत्त्यपरनामाक्षेपः । तज्जन्यं ज्ञानमपि तन्नामकं प्रमित्यन्तरम् ।

तार्किकमते आक्षेपोऽनुमानम् । यथा 'भावना क्वचिदाश्रिता, गुणत्वात्, सकर्तृका वा कार्यत्वात्, घटवत्' इत्यनुमितिजनकं व्याप्तिज्ञानादिकमाक्षेपः । एवञ्चाक्षेपेण भावनाज्ञानोत्तरमर्थापत्त्या, अनुमित्या वा कर्ता बोध्यते । मीमांसकैराक्षेपलभ्यस्यापि शाब्दबोधविषयत्वाभ्युपगमादाख्यातजन्यशाब्द बोधे भानमविरुद्धम् । एवं फलस्यापि स्वाश्रयं विनाऽनुपपत्त्या तेन स आक्षिप्यते ।

ननु वृत्त्या पदजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वेनाक्षेपलभ्यस्य शाब्दबोधे हेतुत्वं न सम्भवति ।

किञ्च, अनुपपत्त्यादिज्ञानविधुराणामप्यनुभवसिद्धतद्बोधानुपपत्तिः, आक्षिप्ते तत्राख्यातार्थसङ्ख्यान्वयानुपपत्तिश्च, वृत्त्या पदानुपस्थितत्वात् । तथा चोच्यते 'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति । शाब्दी = शाब्दबोधविषयिणी, आकाङ्क्षा = जिज्ञासा, शब्देनैव प्रपूर्यते = वृत्त्या पदार्थोपस्थितिद्वारा विषयसिद्धिसम्पादनेन निवार्यते इति तवाशयः । इत्यत आह—लक्षणयेति ।

न च विपरीतमेव किं न स्यात्, प्राधान्येन प्रतीयमानत्वात् । भावनायाः प्रत्ययवाच्यत्वे स्थिते तया कर्तुराक्षेपो युक्तस्तिङि, कृति त्वाक्षेपलभ्यत्वे तिङीव तस्याप्रधान्यापत्तिः । प्राधान्येन प्रतीयमानत्वाच्च तस्य वाच्यत्वम् । संख्यान्वयानुपपत्त्या सामानाधिकरण्यानुपपत्त्या 'लः कर्मणि' (३४४।६९) इत्यादौ धर्मिनिर्देशेन च कर्त्रादौ लक्षणावसीयते । लक्षितकर्तारमादायैव च 'देवदत्तः' पचति' इत्यादौ सामानाधिकरण्योपपत्तिः । 'लः कर्मणि' (३।४।६९) इत्यनुशासनं तु लाक्षणिकाद्यनुशासनमिति वदन्ति ।

यद्यपीदमपि प्रागुक्तदूषणैर्दूषितमेव, तथापि कानिचिदन्यान्यप्युच्यन्ते । तथाहि—शाब्दयामीत्यनुभवविरोधादाक्षेपो न युक्तः ।

किञ्चाक्षेपेण प्रतीतस्याभिधाननियामकत्वे कर्मप्रत्ययेऽपि पच्यत इत्यादेः 'पाकः क्रियत' इति विवरणदर्शनेन भावनाया वाच्यत्वाश्रयकत्वे तस्याश्च विनाश्रयमनुपपत्त्या कर्तुराक्षेपसम्भवात् । कर्त्रभिधाने तृतीयानापत्तिः । न च कर्तृप्रत्यये कर्तरि विधानसामर्थ्याल्लक्षणाश्रयणेऽपि कर्मप्रत्ययस्थले आक्षेपलक्षणयोः

मानाभावः। आश्रयाकाङ्क्षायाश्चैत्रादिपदैरेव शान्तिरिति वाच्यम्, एवमप्याक्षेपलभ्याया अपि व्यक्तेः प्राधान्यस्य तव मते सत्त्वेन प्राधान्यानुरोधाच्छक्तिकल्पना न युक्ता। अन्यथा व्यक्तेरपि वाच्यत्वापत्तावाकृत्यधिकरणोच्छेदापत्तिः। व्यक्तेरविशेष्यत्वे तु वाहदोहाद्यनन्वयः। न च परिच्छेद्यतयावगतत्वाद् द्रव्यं तथा आख्याते परिच्छेद्यतयाक्षिप्तकर्तुस्तद्वदेव विशेष्यत्वापत्तेः।

किञ्च, प्रत्ययार्थः प्रधानमित्यस्य, छागोत्यादौ व्यभिचरितम्।

किञ्च, कर्त्रा भावनाया एवाक्षेपोऽस्तु, मास्तु भावनाया एव वाच्यत्वम्। ननु भावनया कर्त्तुराक्षेपो युक्तः, न तु कर्त्ता तस्याः। कर्मप्रत्ययस्थले भावनाप्रतीत्यन्नापत्तेरिति चेत्, न; कर्मणोऽपि भावनान्वयित्वेन तदाक्षेपकत्वात्। कर्मकर्तृकृत्सु तदाक्षेपाय त्वयाप्येवं स्वीकर्तव्यत्वात्। अत 'एव किं कार्यम्' पचनीयम् किं कृतं पक्वम्' इत्यादि पक्ववान् पाकं कृतवानिति व्यवहारः। न च 'कर्तरि कृत्' (३।४।६७) इत्यनुशासनात् कर्त्तुः कृतिवाच्यता 'लः कर्मणि' (३।४।६९) इत्यनुशासनस्य तिङ्क्ष्वपि सत्त्वात् तत एव हि तत्र कर्तृग्रहणमनुवर्तते। न चेदं निरूढशासनस्य तिङ्क्ष्वपि सत्त्वात् तत एव हि तत्र कर्तृग्रहणमनुवर्तते। न चेदं निरूढलक्षणातात्पर्यग्राहकमनुशासनम्, 'कर्त्तरि कृत्' (३।४।६७) इत्यस्यापि तथात्वापात्तेः।

ननु 'लः कर्मणि च', 'तिप्तस्झि', 'द्वयेकयोः' इत्यादीनामेकवाक्यतया विधायकत्वे कर्तृगतैकत्वेऽभिधेये लस्य स्थाने एकवचनं तिबादि प्रयोक्तव्यमित्यादिक्रमेणार्थान्नि कर्तुर्वाच्यता सूत्रादायातीति चेत्, न; द्विवचनादिसञ्ज्ञानामादेशनिष्ठत्वेन तद्विधिना 'द्वयेकयोः' इत्यादीनामेकवाक्यत्वेऽपि तत्र कर्त्तरीत्यस्याभावेन तस्यैकत्वादिविशेषणत्वासम्भवात्। न च लविधितिबादिविध्योरप्येकवाक्यताऽस्तीति चेत्, अस्ति, परन्तु वाक्यैकवाक्यता, सा, न पदैकवाक्यता। लविधिलभ्यलकारानुवादेनानेकविधेः प्रवृत्तेः। तथा च लविधिस्थकर्तुर्ग्रहणं स्ववाक्यार्थवेलायामेकत्वादीनामनुपस्थित्या कथं तद्विशेषणं स्यात्। न चावान्तरवाक्यार्थेऽन्वितस्य तदेकवाक्यतावेलायामावृत्त्या एकत्वादिविशेषणमपीति वाच्यम् आवृत्तौ मानाभावात्।

ननु 'लः कर्मणि' (३।४।६९) इत्यत्र ल इति ङसन्तम्; आदेशापेक्षया षष्ठी, लस्य य आदेशः, स कर्मणीत्यादिक्रमेणार्थः, लकारश्च 'वर्त्तमाने लट्' (३।२।१२३) इत्यनेनैव विहित इति न दोष इति चेत्, न; एवं हि लस्यानर्थकत्वं कालवाचकत्वं वा स्यात्। तथा च शतृशानचोः कर्तृकर्मादि वाच्यं न स्यात्। तथा चास्य माने गत इति भावे क्रियमाण इति कर्मणि च शानच् न स्यात्।

न च शानचः 'कर्तरि कृत्' (३।४।६७) इत्यनुशासनात् कर्तैव वाच्यः, भावकर्मणोस्तु लक्षणेति वाच्यम्, शास्त्रातिक्रमेण स्वेच्छामात्रेण लक्षणायामसाधुतापत्तेः। न च 'लटः शतृशानचौ' (३।२।१२४) इत्यनेनात्मनेपदपरस्मैपदविधायकानामेकवाक्यलुप्तत्वादभावस्य वृत्त्यार्थबोधकत्वाभावेन तदर्थो निर्दिष्टः स्यात्। न चाम इत्यादेशविधायकेन सह 'लः कर्मणि' (३।४।६९) इत्यस्य वाक्यैकवाक्यत्वाल्लुक्शब्देन तत्सहचरितामन्तलक्षणाच्च न दोषः।

एवमपि ङसन्तत्वे श्रुतेनैव सम्बन्धः, षष्ठ्यन्तत्वे त्वादेश इत्यध्याहार्यम् । अपि चोक्तरीत्या 'लः कर्मणि' (३।४।६९) इति सूत्रे आदेशा अप्यनुवाद्याः । ते च 'लस्य' इत्यधिकृत्य 'तिप्तस्झि' (३।४।७८) इति विहिताः । तथा च परिपूर्णवाक्यस्यैवानुवाद्यसमर्थकत्वान्महावाक्यार्थबोधं प्रति कारणत्वाच्च तदेकवाक्यतयैव पदविशेषपुरुषविशेषव्यवस्थापकनामिव वचनविशेषव्यवस्थापकस्यापि प्रवृत्तिध्रौव्ये पुनरिदानीं प्रवृत्तिर्निर्मूला; कर्त्राद्यर्थानां द्विवचनादिसञ्ज्ञाविनिर्मुक्तत्वात् ।

किञ्च, पुनः प्रवृत्तिर्व्यर्था 'तिप्तस्झि' (३।४।७८) 'द्वये कयोः' (१।४।२२) इत्याद्येकवाक्यतयैवैकत्वादौ वाच्यवायाः सिद्धत्वात् । न च कर्त्रादौ शक्त्यबोधनेन मीमांसकमतसिद्धिरेव फलम्, मतसिद्धौ पुनरन्वये च मतसिद्धिरित्यन्योन्यश्रयात् । अपि च पुनः प्रवृत्तिरनिष्टावहा, गौरवस्य सत्त्वात् ।

किञ्च, कर्त्तरि एकत्वे इत्यर्थाङ्गीकारेऽपि विशेषणतया कर्त्रादीनां प्रवेशात् तद्वाच्यत्वं दुष्परिहरम् । न च लक्षणया तल्लभान्न वाच्यत्वम्, तत्र-तत्र तात्पर्यान्यथानुपपत्त्यैकत्वा दिविशिष्टे कर्त्रादावेव लक्षणयोपपत्तौ तस्या अपि वाच्यत्वानापत्तेः । अपि च, सङ्ख्यायाः परिच्छेदकत्वेन विशेषणतैवोचिता—एकस्मिन्कर्तरीति । तथा च धर्मिणि शक्तिर्दुर्वारा ।

अपि च, 'भावकर्मणोः' (१।३।१३) 'शेषात्' (१।३।७८) इत्यादिभिः शत्रादिविधिनैकवाक्यतया यथाधर्मिणि शक्तिर्बोध्यते, तथा तिबादिविध्येक वाक्यत्वेऽपि युक्तम्, वैषम्ये बीजाभावात् ।

अपि च त्वदुक्तरीत्याऽनुशासनेन धर्मिणि शक्त्यभावे सिद्धे लिङ्गं धर्मे शक्तिरपि न सिध्येत्, अनुशासनाभावात् । तं विनापि तत्सिद्धौ 'कर्तरि कृत्' (३।४।६७) इत्यादीनां वैयर्थ्यापत्तिः ।

किञ्च, जातिशक्तिनये घटमित्यादौ जात्याक्षिप्तद्रव्ये जातेर्विशेषणत्ववद् भावनाक्षिप्ते भावनाया विशेषणत्वापत्तौ भावनाप्रधानकबाधानापत्तेः । स च तवापि सम्मतः । व्युत्पत्त्यन्तरकल्पने तु गौरवम् ।

किञ्च, लक्षितकर्त्रा देवदत्तादेः सामानाधिकरण्यनिर्वाहे पिङ्गाक्ष्यादियोगिकानामपि द्रव्यवाचित्वं न स्यात्, सामानाधिकरण्यस्याक्षिप्तद्रव्येणैवोपपत्तेः । तथा हि—दण्डोत्यतो दण्डसम्बन्धवानिति प्रतीतिरनुभवसिद्धा । तत्रतदस्यास्त्यस्मिन्निति मतुप्' (५।२।९४) मत्वर्थे बहुव्रीहिरित्यद्यनुशासनेन विग्रहे षष्ठ्यर्थस्यैव प्राधान्यदर्शनेन च सम्बन्ध एव शक्तिः स्यात् । तदाक्षिप्तेन च सामानाधिकरण्योपपत्तिः ।

तथा च 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' अत्र किं वाक्यं भङ्क्त्वा अरुणिमा प्रकारे विवेशनीयः ? किं वा क्रोणातिना सम्बध्यते ? इति संशये क्रीणातिना सम्बध्यमानः; तद्द्वारा

क्रीणात्यर्थेनापि साकमन्वयलाभाद् वाक्यघटकत्वमेव तस्येति। स चानुपपन्नः, पिङ्गाक्ष्यादियौगिकानां पदानामुक्तयुक्त्या सम्बन्धार्थकतया द्रव्यस्य तैरनुपादानात्।

किञ्च, पूर्वपक्षोऽप्यनुपपन्नः, पिङ्गाक्ष्येकहायनीशब्दार्थसम्बन्धस्याप्यमूर्तत्वात् क्रीणातिकरणत्वासम्भवेन क्रीणातिकरणत्वस्यैतद्वाक्यादलाभादारुण्यस्यैव वाक्यभेदशङ्कायां मूलशैथिल्याच्च। बहुव्रीह्योररुणपदस्य च लाक्षणिकद्रव्यविधायकताया अविशिष्टत्वेन बहुव्रीह्यादेरेव द्रव्यविधायकत्वम् नारुणपदस्येत्यत्र विनिगमकाभावात्।

इति वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्त द्रव्याएवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिः। न च लक्षणापक्षे न दोषः, आक्षेपपक्षेऽपि जातिशक्तिनये व्यक्तेः साक्षात् प्रकृतिवृत्त्युपस्थाप्यत्वाभावेऽपि वृत्तिप्रयोज्योपस्थितिविषयत्वमादाय तत्र प्रत्ययार्थाद्यन्वयवदाक्षिप्ते स्ववाक्योपात्तत्वस्यापि वक्तुं शक्यत्वादिति वाच्यम्, एवमपि लाक्षणिकद्रव्यनिवेशेऽरुणपदस्यापि गुणिनि लाक्षणिकत्वात् पदीयद्रव्यनिवेशेनैवोपपत्तौ वाक्यीद्रव्यनिवेशसिद्धान्तासङ्गतिः स्पष्टैव।

मम तु शक्त्युपस्थितद्रव्येणैव निराकाङ्क्षत्वाल्लक्षणाप्रसर एव नारुणपदे इति सिद्धान्तोपपत्तिः। किञ्च, एवं सति विशिष्टशक्त्युच्छेदापत्तिः। न चाकृत्य विकरणन्यायेनेष्टापत्तिः, तेनैव सिद्धौ पृथगत्राधिकरणारम्भवैयर्थ्यापत्तेः।

किञ्च, घटादिपदेभ्यो घटत्वविशिष्टस्यैव नियतो बोध इति घटत्वस्य वृत्त्यविषयत्वे शाब्दविषयत्वायोगात् तदंशे वृत्तिकल्पनावश्यकत्वे 'नागृहीतविशेषण' न्यायेन तन्मात्रवाचित्वसिद्धौ द्रव्याक्षेपो युक्ता। न चाक्षिप्तस्यापदार्थत्वात् तत्र प्रत्ययार्थाद्यनन्वयप्रसङ्गः, वृत्तिप्रयोज्योपस्थितेरेव तत्र नियामकत्वाददोषः, न चैवं दण्डीत्यादौ।

नन्वत्रापि दण्डसम्बन्धीति बोधात् सम्बन्धी वाच्यः, सम्बन्धः शक्यतावच्छेदकः, सम्बन्धत्वं च शक्यतावच्छेदकानामुपलक्षणम्। एवञ्चात्रापि घटत्वस्थानीयः सम्बन्ध एव वाच्यः स्यादिति चेत्, न; जातौ शक्तिर्हि अनन्त्यादिदोषभिया 'नागृहीतविशेषण' न्यायेन अन्वयः स्वीक्रियते, सम्बन्धशक्तावपि तस्य तदवस्थत्वेन न व्यक्तिपक्षाद् विशेषः। न च सम्बन्धशक्तावपि व्यापारपरत्वे आख्यातसामान्यलक्षणस्यास्य भावाख्यातेऽव्याप्त्यापत्तेः, 'चैत्रेण सुप्यते इत्यादौ हि धात्वर्थस्यैव विशेष्यतायास्त्वयाप्यङ्गीकारात्।

अपि च, किं कृतमिति प्रश्ने पक्वमित्युत्तरदर्शनात् पक्ववानित्यादेः पाकं कृतवानित्यादिविवरणदर्शनाद् धात्वर्थात् पृथक् तद्दर्शनाच्च कृत्यपि भावना वाच्या स्यात्। तस्याञ्च भवद्रीत्या प्राधान्यापत्तिः प्रत्ययार्थत्वात्।

यदि तत्र कर्तृकर्मभ्यामाक्षेपलभ्या, तर्हि तिङ्क्ष्वपि तथैव स्यादिति तयोर्वैषम्यं दुरुपपादम्। न च कृदुपस्थाप्ये लिङ्गसंख्यान्वयदर्शनात् कर्ता वाच्यः, सङ्ख्यान्वयाय तिङ्यपि कर्तुर्वाच्यतापत्तेः, लिङ्गसङ्ख्यान्वयस्य घटमित्यादावविवाक्षिप्तेनाप्युपपत्तेश्च, कर्त्रा हि कृदन्तमहासंज्ञाकरणेन कृत्तिङोस्तुल्यत्वबोधनाच्च।

किञ्च, कारकाणामाख्यातार्थभावनायामन्वये स्थाल्यामित्यादिकारकाणामन्वये स्ववृत्तितण्डुलनिष्ठविक्लित्तिजनकत्वं सम्बन्धस्त्वया वाच्यः, मम तु स्ववृत्तिवृत्तित्वं सम्बन्ध इति लाघवम्। एवं काष्ठादेर्यत्नरूपभावनाकरणत्वं न स्वरसत उपपादयितुं शक्यम्। धात्वर्थाजनकतया तत्करणत्वेन तद्द्वारा भावनान्वये तु 'तद्धेतोः' इति सम्बन्धत्वेनोपलक्षणीभूतेनानुगमान्नानन्त्यादिदोषः, परम्परया तदुपलक्षणीकृत्य सम्बन्धिन्येव शक्तेर्ग्रहीतुमुचितत्वात्।

तद्धेतोरेव तत्त्वे किं तेन इति न्यायाकारः लाघवमूलकश्चायम्। तस्य=हेतुभूतस्य, हेतुः, तद्धेतुश्चासौ न्यायश्च तद्धेतुन्यायः। कस्मिंश्चित् कार्ये क्लृप्तहेतुनैव सिद्धे पुनस्तद्धेतोर्हेतुकल्पनं निष्फलमिति निष्कृष्टोऽर्थः। यथा समाप्तिं प्रति लाघवाद् विघ्नध्वंसस्यैव हेतुत्वे कल्प्यमाने विघ्नध्वंसजनकमङ्गलस्य हेतुत्वकल्पने गौरवम्।

एवञ्च यज्जन्यबोधे यस्य नियमेन प्रकारतया भानम् अनुगतत्वञ्च, तत्रैवाकृत्यधिकरणन्यायप्रवृत्तिः, तत्रैव च तदाक्षिप्तेन सामानाधिकरण्यनिर्वाहः, नान्यत्रेति बोध्यम्।

'शक्तिः कारकम्' इति पक्षेऽस्माकं तु न दोषः, कर्तृकर्मादिबोधेऽखण्डोपाधिरूपकर्तृत्वादेर्नियमतः प्रकारतया भानेन तत्रैव शक्तिसिद्धौ तदाक्षिप्तेन सामानाधिकरण्योपपत्तेः, शक्तिशक्तिमतोरभेदाद् वा तदुपपत्तिः कर्मपदेन हि शक्तिमदभेदमापन्नैव शक्तिरुच्यत इति 'सार्वधातुके यक्' (३।१।६७) इत्यत्र कैयटे स्पष्टम्।

तस्माद् पूर्वोक्तयुक्तिभिर्भावनाऽपि धातुवाच्यैव। 'प्रत्ययार्थः प्रधानम्' इत्युत्सर्गस्यापि भाष्यकाराद्यनुभवबलेन त्यागः।

किञ्चैवम् 'क्रियाप्रधानमाख्यातम्' इति निरुक्तादिविरोधः, तत्रत्यक्रियाशब्दस्य प्रत्ययार्थन्यायेन धात्वर्थेऽन्वय एवोचितः।

किञ्च, 'कर्तृकर्मणोः कृति' (२।३।६५) 'करणे यज' (३।२।८५) 'कर्तृकरणे कृता' (२।३।३२) इत्यादीनामसङ्गत्यापत्तिरित्यलम्।

ननु कर्त्तुराख्यातार्थत्वे दर्शपूर्णमासप्रकरणपठितं नानृतं वदेत्' । तत्र हि किमयं प्रतिषेधः पुरुषार्थः, आहोस्वित् क्रत्वर्थ इति संशये, वदेदित्याख्यातात् कर्तुः प्रतीत्या कर्तृवाचकत्वनिर्णयः । 'लः कर्मणि' इत्यनुशासनात् तस्य कर्तृपरत्वलाभाच्च । प्रत्ययार्थत्वेन वदनं प्रति प्राधान्याद् वदनं तावत् पुरुषार्थः, अतः प्रतिषेधोऽपि पुरुषार्थः । निषेधप्रतियोगित्वेन वदनक्रियामनुवदता वदेदिति शब्देन पुरुषार्थतयैव बोधनात् तादृशस्यैवाऽनुवदनस्यानिष्टसाधनताया विपरीतस्वभावबोधकनञा बोधनादन्यादृशाऽनुवदनस्य चाऽनुपस्थितत्वात्। अत एवानारभ्याऽधीतस्मात्तवदननिषेधस्याप्येतदेव मूलं भवतीति लाघवम् । अन्यथा तन्मूलभूतः पुरुषार्थोऽन्यो निषेधः कल्प्य इति गौरवं प्रसज्येतेति पूर्वपक्षे' अनन्यलभ्य एव शब्दार्थः' इति न्यायाद् भावनैवाख्यातवाच्या, कर्त्ता त्वाख्यतवाच्यभावनाया अविनाभावादाक्षेपलभ्य एवेति न तत्र तस्य शक्तिः । 'लः कर्म्मणि' इत्यादिस्मृतिरपि 'द्व्येकयोः' इत्यनेनैकवाक्यतया तत्सङ्ख्यातवाचित्वपरैव । 'पचति देवदत्तः' इत्यादौ च 'गौः शुक्लः' इतिवत् सामानाधिकरण्यं लक्षणयैवेति नाख्यातस्य कर्त्तृवाचित्वमिति क्रतोः श्रुतेरनुपस्थितत्वान्न पुरुषार्थता तस्य, किन्तु प्रकरणात् क्रत्वर्थतैवेति निर्णीतं कत्र्वधिकरणे ।

इति निषेधस्य क्रत्वर्थत्वं न सिध्येत्, श्रुत्या पुरुषार्थत्वप्रसङ्गात् । प्रकरणाद्धि क्रत्वर्थत्वम्, तस्य च श्रुत्यपेक्षया दुर्बलत्वं स्पष्टमेवेति चेत्, न; कर्त्तृवाच्यत्वे उक्तसिद्धान्तः, उक्तसिद्धान्ते च तदनुरोधेन तस्या वाच्यत्वमिति परस्पराश्रयग्रस्तत्वात् ।

किञ्च, कर्त्तुराख्यतार्थत्वेऽपि श्रुतिप्रकरणाभ्यामस्यास्तु क्रतुयुक्तपुरुषधर्मता । अन्यथा जञ्जभ्यमानवाक्यस्य वाक्यप्रकरणाभ्यां पुरुषसंस्कारमुखेन क्रत्वर्थत्वसिद्धान्तस्त्वदोय उच्छिद्येत । तदुक्तं भट्टैः—

स्त्र्युपायमांसभक्षादिः पुरुषार्थमपि श्रुतः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ इति ।

किञ्च, कर्त्तुर्वाच्यत्वेऽपि क्रियाया एव प्राधान्यात् कर्तुर्गुणभूतत्वाच्चानृतवदनभावनाया न पुरुषार्थत्वम् । एवञ्च भावनाया कैमर्थ्याकाङ्क्षायां प्रकरणाद् भवतामिव शुद्धत्वर्थत्वमपि वक्तुं शक्यम् । क्तप्रत्ययस्थले तु कर्तुर्विशेष्यत्वात् तत्संस्कारमुखेनैव क्रत्वर्थत्वमिति ।

किञ्च, भावनाया वाच्यत्वम्, कर्त्तुराक्षेप इति तव मतेऽपि प्रकरणोपस्थाप्यार्थापेक्षया श्रुत्युपस्थितभावनाक्षिप्तकर्त्तुः प्रथमोपस्थितया क्रत्वर्थत्वं न सिध्येत् तत्सिद्धम्; आश्रयः, आश्रयत्वं वा कर्तृकर्मतिङ्शक्यम् इति । स्पष्टञ्चेदम् 'गत्यर्थलोटा' (८।१।५१) इति सूत्रे भाष्ये ।

तत्र धात्वर्थफलं तदर्थव्यापारे प्रायो विशेषणम्, आख्यातार्थः कारकं धात्वर्थं प्रति विशेषणम्, कालश्च, सङ्ख्या त्वाख्यातार्थान्वयिनी । तत्राश्रयस्य क्व फलेऽन्वयः, क्व व्यापार इति चेत्, अत्र वदन्ति— तङ्यक्चिणादयः फले आश्रयान्वयद्योतकाः, शप्श्नमादयो व्यापारे ।

वस्तुतः प्रकरणाद्येव द्योतकम्, कर्तृकर्मविषये वैपरीत्यदर्शनात् । न च तिङां शबादीनाञ्चानुशासनबलात् कर्तृवाचकत्वे तस्य वारद्वयं बोधापत्तिः, शबादीनां द्योतकत्वस्वीकारात् ।

स्यादेतत्—आश्रयस्यैव प्राधान्यमुचितम्, कालातिरिक्ताख्यातार्थप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेहेतुत्वादिति चेत्, न; आख्यातार्थप्रकारकबोधे धातुजन्योपस्थितेरेव लाघवेन हेतुत्वात् । सङ्ख्यान्वयस्तु समानाभिधानश्रुत्याख्यातार्थाश्रय एव । कार्यकारणभावान्तरं तु त्वयापि कालान्वयाय कल्प्यमानेन तुल्यम् । किन्तु त्वदुक्तकार्यकारणभावादिकमपि भिन्नपदघटितत्वाद् गुरु, मम त्वेकघटितत्वाल्लघुः ।

किञ्च, 'करोति, जानाति' इत्यादौ कालान्वयोऽपि धात्वर्थ एवेति सोऽपि तवावश्यक इत्यति गौरवम् ।

किञ्च, त्वदुक्तकार्यकारणभावस्य 'न पचति चैत्रः' इत्यादौ नञर्थे आख्यातार्थान्वियेन व्यभिचारः, तत्रैव चैत्रे सङ्ख्यान्वयेन भावनान्वयिन्येव सङ्ख्यान्वय इति नियमस्यापि व्यभिचारश्च । न च निपातसमभिव्यवहारस्थले सङ्ख्याभावनयोः पृथगेव कार्यकारणभावो वाच्य इति वाच्यम्, अनेककार्यकारणभावकल्पनया गौरवापत्तेः ।

किञ्च, चैत्रेण सुप्यते' इत्यादौ भावाख्यातेऽपि प्रथमान्तपदाध्याहारापत्तिः, भावार्थकभिन्नत्वविशेषणदाने च सुतरां गौरवम् ।

किञ्च, 'भावप्रधानमाख्यातम्' इति यास्कविरोधः, तत्समानार्थकक्रियाप्रधानमिति भाष्यपठितवचनविरोधश्च । तिङर्थापेक्षया धात्वर्थः प्रधानमिति तदर्थः । न च धात्वर्थापेक्षया क्रियाकृतिः प्रधानमिति तदर्थः, तस्याः कृतेरन्यत्र विशेषणत्वेऽपि धात्वर्थापेक्षया प्राधान्यमस्त्येव, भावशब्देनापि भावयतीति व्युत्पत्त्या कृतिरेवोच्यत इति वाच्यम्, भावार्थकलकारेऽव्याप्तेः ।

किञ्च, तव पश्य मृगो धावतीति वाक्यं न स्यात्, मम तु धावनक्रियाया दृशि कर्मत्वान्न दोषः । न च तस्या दर्शनविशेषत्वे क्रियायाः प्राधान्यमिति त्वत्सिद्धान्तविरोधः, प्रत्यासत्याऽऽख्यातघटकप्रत्ययार्थापेक्षया क्रियायाः प्राधान्यबोधनादक्षतेः, 'सत्वप्रधानानि नामानि' इति वाक्यशेषेण सत्त्ववाचकवाच्यर्थविशेषणत्वाभावस्यैव 'क्रिया प्रधानम्', इत्यनेन बोधनाच्च । अत्र शब्दजन्योपस्थितेरेव शाब्दबोधकारणत्वे कर्मत्वं संसर्ग एव । तव त्वीदृशे विषये भाष्यादिसिद्धैकवाक्यता भज्येत । न च मृगस्यैव दर्शने कर्मत्वेनान्वयः, विभक्त्यर्थमद्वारीकृत्य नामार्थधात्वर्थयोः साक्षात् भेदेनान्वयायोगाद् । न च ततो द्वितीयास्तु, एवमपि प्रागुक्तवाक्यासिद्धिरेव ।

किञ्च, प्रथमान्तपदजन्योपस्थित्यभावेन धावतीत्यस्य मृगविशेषणत्वानापत्तिः !

किञ्च, अप्रथमासामानाधिकरण्ये तिङो बाधित्वा शत्राद्यापत्तिः । न च वासरूपन्यायेन तिङोऽपि, तादेशेषु तदभावस्य शब्देन्दुशेखरे प्रतिपादित्वात् । न च वाचनिकी प्रथमैवात्र कर्मत्वार्थेति वाच्यम्, तादृश-वचनानुपलम्भात् । न च यो धावति मृगः, तं पश्य, इत्यध्यहारेणान्वयः, वाक्यभेदापत्तेः, उत्कटधावनक्रियाया एव दर्शनकर्मत्वस्य प्रतिपिपादयिषितत्वाच्च ।

न च विशिष्टस्य वाक्यार्थस्य कर्मतासंसर्गेण दर्शनेऽन्वयः । एवञ्च न व्युत्पत्तिविरोधः, व्युत्पत्ते-र्नामार्थविषयत्वात् । विशिष्टवाचकस्याप्रातिपदिकत्वाच्च न द्वितीयापत्तिरिति वाच्यम्, विशिष्टस्य त्वन्मतेऽप्यनतिरिक्तत्वात् । अत एव नीलविशिष्टघटस्य दर्शनकर्मत्वे प्रतिपिपादयिषितेऽपि 'नीलं घटं जानामि' इत्यादौ द्वितीयासिद्धिः ।

किञ्च, देवदत्तकर्तृकपचिक्रियाकर्मकोत्पत्त्यनुकूलयत्नस्त्वद्वृत्तिरित्यर्थकदेवदत्तः पचति करोत्य-स्यानापत्तिः । आख्यातोपात्तक्रियायाः सर्वनामपरामर्शायोग्यत्वेनाध्याहारादिनाऽपि न निर्वाहः ।

अपि च, पाकक्रिया भवतीत्यर्थे पचति भवतीत्यास्यानापत्तिः, पचति व्रजतीत्यस्यापत्तिश्च । न च तथा व्युत्पन्नानां तथा बोधस्य तथा तथा शक्तिग्रहस्य च सत्त्वेन कथमापत्तय इति वाच्यम्, बोधस्य व्युत्पत्त्य-नुसारिणो जायमानत्वेऽपि तादृशेऽर्थे साधुत्वस्यापाद्यत्वात्, साधुत्वस्यार्थघटितत्वात् । तच्च तदर्थनिरूपणा-भियुक्तवैयाकरणासम्मतार्थ एव, नान्यत्रेत्येतावदिहोच्यते ।

न चैवमेधामित्यस्य क्रियाप्रधानत्वानापत्तिस्तिङन्तत्वाभावादिति वाच्यम्, लिटो वाचकत्वादाप्त-स्वार्थिकत्वेन चान्यस्य प्रधानत्वयोग्यास्याभावेन, अर्थात् तस्या एव प्राधान्यात्, आख्यातपदेन कृदादेशरहित-लान्तग्रहणे तु दोषशङ्कैव न, सत्त्ववाचकप्रत्ययान्तत्वाभावेन 'सत्त्वप्रधानानि' इत्यस्याप्रवृत्तेश्च ।

आख्यातपदेन क्वचिद् धातोर्ग्रहणम् । अत एव 'नामाख्यातोपसर्गनिपाताः' इत्यत्र भाष्ये प्रकृति-त्वेनोल्लेखः । अत एव च 'नामान्याख्यातजानि' इति शाकटायनः । 'आख्यातमाख्यातेन क्रियासातत्ये' इत्यत्र त्वेतन्मते आख्यातप्रकृतिकतिङन्ते लक्षणा । 'भावप्रधानमाख्यातम्' इत्यत्रापि आख्यातपदेन धातुर्ग्राह्यः ।

शब्दरत्नकारस्तु—आख्यातपदेन तिङन्तस्य ग्रहणमभिप्रैति । निरुक्तप्रामाण्यात् शब्दशास्त्रे क्वचित् तिङन्तस्य ग्रहणम्, क्वचिच्च धातोर्ग्रहणमाख्यातपदेन । अत आख्यातपदेन तिङो ग्रहणमिति तार्किकोक्तमनादरणीयमेव ।

किञ्च, 'नानृतं वदेत्' इत्यनारभ्याधीते वचने दर्शपूर्णमासप्रकरणस्थे च विनिगमनाविरहाच्छन्दानृतमर्थानृतं चेत्युभयमपि निषिध्यत इत्यन्यत्र निर्णीतम् ।

तथा च साधुत्वनिर्णायकसूत्रवार्तिकभाष्यकारास्तिङां कर्त्र्येव साधुत्वकथनात् तदुल्लङ्घनेन याज्ञे कर्मणि भावनारूपेऽर्थे प्रयुञ्जाना मीमांसकादयश्चतुर्थीमिव षष्ठ्याद्यर्थे कथं न प्रत्यवयन्तु, कथं वा यज्ञो नाविगुण इति विचार्यम् । न च निर्मूलमेतदनुशासनम्, तस्मात् 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतेर्मूलत्वात् ।

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

इति पराशरीयपुराणाच्च । जैमिनिप्रभृतीनां त्वत्र तात्पर्याभावाद् न तदुक्तिः साधुत्वनिर्णायिका । तदुक्तम् 'साधुत्वज्ञानविषयैषा व्याकरणस्मृतिः' इति व्याकरणस्यापि शक्तिग्राहकत्वं वृद्धैरुक्तम् 'शक्तिग्रहं व्याकरणोपमान' इत्यादिना चैतेषामसाधुत्वे ततस्तत्तदर्थबोधस्तेषां तेषां न स्यादिति वाच्यम् । वस्तुतोऽसाधुत्वेपि भ्रमात्मकतज्ज्ञानसम्भवात्, साधुत्वज्ञानस्य कारणत्वाभावादसाधुत्वनिश्चयस्य बोधप्रतिबन्धकत्वाभावाच्चेति दिक् ।

किञ्च, प्रथमान्तविशेष्यकबोधे कीदृशस्तण्डुल इति प्रश्ने, कीदृशश्चैत्र इति प्रश्ने च, पक्वस्तण्डुलः, पाकश्चैत्र इत्युत्तरवत् पच्यते पचतीत्युत्तरस्याप्यापत्तिः । न च 'पश्य मृगो धावति, पचति, भवति' इत्यादौ क्रियायाः कर्तृत्वकर्मत्वादिनान्वये तस्य असत्त्वरूपता न स्यादिति वाच्यम्, कर्तृकर्मेतरकारकत्वेनान्वयिता-मात्रेण तथात्वात्, क्रियानाधारकारकत्वेनान्वयाद् वा कर्मत्वादेरप्रकारत्वाङ्गीकाराद् वा तत्त्वम् ।

न चैवमप्यसिद्धस्य दर्शनकर्मत्वासम्भवात् कथं धावनस्य दर्शनकर्मतेति वाच्यम्, समूहस्यासिद्धत्वेऽपि अवयवशः सिद्धत्वेन प्रत्यक्षकर्मत्वोपपत्तेः ।

नन्वेवमपि रोदितीव पठतीत्यादौ क्रिययोरुपमानोपमेयभावसत्त्वात् साधारणधर्माधारत्वरूपस्य सत्त्वस्य 'तेन तुल्यम्' ५।१।११५) इति सूत्रकैयटाद्युक्तस्य सत्त्वेनासत्त्वरूपताभङ्गः । न च प्रत्ययोत्तरमिव शब्दश्रवणेन धात्वर्थयोरुपमा दुर्लभेति वाच्यम्, तिङन्तोत्तरमिवशब्दश्रवणेन तदर्थयोस्तस्याः सुलभत्वात् । न चात्र कर्त्रोरिवोपमानोपमेयभावोऽस्तु, तस्य क्रियां प्रति विशेषणत्वेन तत्त्वासम्भवादिति चेन्, न; तिङन्तसमभिव्याहृतेवशब्दस्य सादृश्यार्थकत्वाभावात् ।

तदुक्तं भाष्ये 'नवै तिङन्तेनोपमानमस्तीवि, किन्तु तत्रत्यभावनार्थं इव शब्द 'इति कैयटः । अत एवालङ्कारिका अपि 'लिम्पतीव तमोऽङ्गानि' इत्यादावुत्प्रेक्षामेवोदाजह्रुः ।

सर्वनामपरामर्शायोग्यत्वरूपमेवासत्त्वं क्रियाया इत्यन्ये। ननु वैयाकरणमतेऽपि 'पचति कल्पं देवदत्तः' इत्यत्रान्वयो दुरुपपादः, आख्यातस्य धर्मिवाचकत्वेऽपि कल्पान्तेन क्रियाविशेष्यकबोधजननेनाभेदस्य बाधात्। भेदेनान्वयस्तु नामार्थयोरव्युत्पन्न इति चेत्, न; यतो नास्माकं भावनाया देवदत्तोऽन्वयः, तस्या आख्याते विशेष्यत्वात्। नापि देवदत्तस्य तस्याम्, कारकविभक्त्यन्तत्वाभावेन तदन्वये मानाभावात्; आख्यातार्थाश्रयान्वयेन तदंशे भावनाया निराकाङ्क्षत्वाच्च। किन्त्वाख्यातार्थाश्रयेऽभेदेन तस्य विशेष्याकाङ्क्षायाः सत्त्वेन तदन्वयस्यैवोचितत्वाद् नामार्थयोरित्यस्यास्वनामजन्यप्रतीतिविशेष्योरभेदेनैवान्वय इत्यर्थः, न तु तयोरेवाभेदान्वय इति न दोषः।

नन्वेवमपि त्वद्रीत्या पचति भवतीत्यादौ समानवाक्ये तिङ्द्वयलाभेन तद्व्यावृत्त्यर्थं 'तिङतिङः' (८।१।२८) इति सूत्रे अतिङ्ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति चेत्, न; लौकिकैकवाक्यत्वसत्त्वेऽपि 'एकतिङ्वाक्यम्' इति स्वपरिभाषितस्यासत्त्वादिति भाष्याशयात्। लौकिककेवाक्यत्वञ्च[1] 'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता इत्यमरेणोक्तम्। अत्र 'वा' शब्दः समुच्यते।

एवञ्च, कारकान्वितक्रियाबोधकसुप्तिङन्तचय इत्यर्थः। सुप् च तिङ् च सुप्तिङ्, सुब्विशिष्टं तिङ् सुप्तिङ्, तयोरेकशेषेऽन्तशब्देन समासः। तेन सुबन्तचयतिङन्तचयसुप्तिङन्तचयानां त्रयाणामपि लाभः। क्रिया वेत्येनेन निरर्थकपदसमुदायव्यावृत्तिः।

यत्तु 'वा' शब्दस्वारस्यार्थस्यापि वाक्यत्वमिति। तत्, न; अर्थे वाक्यशब्दाप्रयोगात्, 'वचोऽशब्दसंज्ञायाम्' (७।३।६७) इति निषेधेन कुत्वानापत्तेश्चेति दिक्।

तत्सिद्धमाख्यातार्थाश्रयापेक्षया धात्वर्थः प्रधानमिति। एवञ्च देवदत्तः पचतीत्यत्रैकदेवदत्तकर्तृकपाकानुकूलक्रियेति बोधः। तण्डुलः पच्यते चैत्रेणेति कर्मलकारे त्वेकचैत्राश्रयिका एकतण्डुलाभिन्नाश्रयिका या विक्लित्तिः, तदनुकूला वर्त्तमाना भावनेति भावनाविशेष्यक एव बोध इति प्राञ्चः।

नव्यास्तु 'पक्वस्तण्डुलः' इत्यादौ कर्मकृत्समभिव्यहारे फलव्यापारयोर्व्यत्यासेन बोधस्यावश्यकतया कर्माख्यातेऽपि फलविशेष्यक एव बोधः। अत एव प्रत्ययार्थे साक्षात्सम्बन्धेन प्रकृत्यर्थविशेष्यान्वयित्वस्य सर्वत्र क्लृप्तस्य न त्यागः। अन्वयित्वं विशेष्यतया विशेषणतया वा। अत एव कर्तृलकारे न फलविशेष्यको बोधः, क्लृप्तप्रागुक्तनियमभङ्गापत्तेः। अत एव 'इष्यते पुत्रः' इत्यर्थे पुत्रीयतीति न प्रयोगः, भिन्नार्थत्वात्। किन्तु 'पुत्रमिच्छति' इत्यत्रार्थ एव। क्यजन्तात् कर्मणि प्रत्ययस्तु दुर्लभः, अकर्मकत्वादिति स्पष्टम् 'सुपः आत्मनः' (३।१।८) इत्यत्र भाष्ये।

---

१—तिङ्सुबन्तचयो वाक्यम् इति मुद्रितामरकोशपुस्तकसम्मतः पाठः।

अत्र हि—'इष्टः पुत्रः, इष्यते पुत्रः' इत्यत्र यदि क्यच् भवति, तदेच्छामात्रस्य क्यचाऽभिधानादवश्यं कर्मणोऽभिधानाय तद्वाचिना प्रत्ययेनोत्पत्तव्यम्। यथा पुत्रीयतीति कर्त्रभिधानाय तिपेत्याशयिका इच्छाक्यजन्तात् कर्मणि प्रत्ययोत्पत्तिः कथन्नेति शङ्का 'अथेह क्यचा भवितव्यम्—इष्टः पुत्रः, इष्यते पुत्रः इत्यादिशब्देन कृता।

यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितम्, तदा वाक्यमेव प्रयुज्यते—'इष्टः पुत्रः' इत्यादि, न तु क्यजन्तः, तस्याकर्मकत्वात् कर्मणि प्रत्ययानुत्पादादित्याशयेन समाधानमाह—केचित् तावदाहुः—न भवितव्यमित्यादि। पुनश्चाग्रे—समानार्थेन वाक्येन भवितव्यम्, प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते—'इष्टः पुत्रः, इष्यते पुत्रः' इति नासौ जातुचित् प्रत्ययान्तेन गम्यते' इति। विवरणविव्रियमाणयोः समानार्थकत्वमिति तत्तात्पर्यम्।

कालस्य तु व्युत्पत्तिवैचित्र्यात् सम्पूर्णधात्वर्थं एवान्वयः। तेन व्यापारापगमे विक्लित्तिसत्त्वे 'पच्यते' इति स्यात्, 'अपाचि' इति न स्यात्। एवं फूत्कारादिदशायां विक्लित्त्यनारम्भे 'पच्यते' इति न स्यादित्यिपास्तम्। तत्राभिमतफलजनने सति तन्निष्पादकसकलव्यापारापगमे भूतत्वं फलावच्छिन्नतादृशसकलव्यापारस्य भावित्वे भविष्यत्वं यावच्चाभिमतफलप्रयोजकक्रियायाः समाप्तिर्न भवति, तावद् वर्तमानत्वमित्याद्यनुपदमेव वक्ष्याम इति प्राहुः।

भावलकारे तु व्यापार एव विशेष्यः क्तान्तादौ सामानाधिकरण्यसम्बन्धेन व्यापारयोरेव परस्परमन्वयदर्शनेनौत्सर्गिकस्य व्यापारनिष्ठफलविशेष्यत्वस्य त्यागे ज्ञानाभावात् तिङ्क्षु धात्वर्थानुवादक एव कालद्योतकत्वं त्वस्त्येव, सङ्ख्या तु तत्र नास्त्येव, सङ्ख्यान्वयिकर्तृकर्मणोऽप्रतीतेः, धात्वर्थस्तु सङ्ख्यान्वयायोग्य एव, धात्वर्थबहुत्वे' मैत्रेण स्थीयते, सुप्यते इत्यनापत्तेश्च।

एवञ्च सङ्ख्याया अभावे उत्सर्गत एकवचनमेव। मध्यमोत्तमावपि न स्तः, तिङ्समानाधिरणयुष्मदाद्यभावात्। उष्ट्रासिका आस्यन्ते, हतशयिकाः शय्यन्ते 'इत्यत्र 'सार्वधातुके' यक् (३।१।६७) इति सूत्रस्थभाष्यप्रयोगादेव बहुवचनं साध्विति वदन्ति। 'आकाशोऽस्ति' इत्यादौ चैकाकाशाभिन्नाश्रयकः स्वरूपधारणानुकूलो वर्तमानो व्यापार इत्यादिक्रमेणोह्यमिति दिक्।

———

# अथाख्यातार्थवर्त्तमानत्वादीनामन्वय-प्रकारस्तल्लक्षणानि

तत्र वर्तमानत्वादीनां धात्वर्थेऽन्वयः, न कर्त्तृकर्मणोः, अतीतक्रिये कर्त्तरि पचतीत्यापत्तेः, अपाक्षीदित्यनापत्तेश्च, वर्त्तमानक्रियावाचकाद्धातोर्लडित्याद्यर्थक 'वर्त्तमाने लट्' (३।२।१२३) इत्यादिभिः सूत्रैर्धात्वर्थेऽन्वयस्यैव बोधनाच्च। स च सम्पूर्णधात्वर्थव्यापारे इत्युक्तमेव। न चामवातजडीकृतकलेवरे उत्थानानुकूलयत्नस्य विद्यमानतयोत्तिष्ठतीति प्रयोगापत्तिः, तस्योत्थानोद्देश्यकत्वेऽपि उत्थानप्रयोजकत्वाभावात्। अत एव तत्र 'उत्थानाय यतते, नोत्तिष्ठति' इत्येव प्रयोगः। यागपाकाद्युद्देश्यककुण्डमण्डपतण्डुलक्रयणादियत्नव्यापारावादाय यगाद्यर्थम्! 'यतते' इत्यादिवत् 'यजति, पचति' इत्यादिवारणाय प्रयोजकताविशेषस्यैव सम्बन्धस्याभ्युपेयत्वात्। एवम् 'गच्छति' इत्यादावुत्तरदेशसंयोगाद्यनुकूलक्रियारूपे धात्वर्थे तदन्वयः। नश्यतीत्यत्रापि प्रतियोगिसहितनाशसामग्रीरूपधात्वर्थे तदन्वयः। अतस्तस्यां सत्यां नश्यति, अतीतायाम् 'नष्टः' इत्याद्युपपद्यते।

केचित्तु—षड्भावविकारेषु नाशस्यापि गणितत्वादुत्पत्तिवत् सोऽपि चरमक्षणसम्बन्ध एव तत्सत्त्वे नश्यतीति तदत्यये नष्ट इत्याहुः।

'नश्यति, नङ्क्ष्यति, नष्टः' इत्यत्र क्रमेण प्रत्ययेन वर्त्तमाना, भविष्यन्ती, अतीता चोत्पत्तिः, प्रतियोगित्वं च लक्ष्यते तथा च तादृशोत्पत्तिमन्नाशप्रतियोगीत्यादिक्रमेण बोधः। अतएव नाशस्य नित्यत्वात् सर्वदा नश्यतीति, श्वो नङ्क्ष्यति पटादौ परश्वो नङ्क्ष्यति, प्रपूर्वेदिननष्टे पूर्वेद्युर्नष्ट इत्यापत्तिर्नेति नैयायिकनव्याः।

नाशत्वमुत्पत्तिमदभावत्वम् तथा च धातुप्रतिपाद्यतावच्छेदकोत्पत्तावेव कालान्वय इति तन्नव्यतराः।

कालश्च क्रियारूप एव, नातिरिक्तः; मानाभावाद्, गौरवाच्चेति तन्त्रान्तरे स्फुटम्। न च 'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इति वाक्यपदीयविरोधः। नहि स्वोच्छेदकत्वं स्वस्यैवोपपद्यत इति वाच्यम्, तत्र कालशब्देन तद्गतवर्तमानत्वादेरेव विवक्षणात्।

'कालोऽतिरिक्तः' इति मते वा तत्।

अन्यदीयक्रिययाऽन्यदीयक्रियापरिच्छेदसम्बन्ध इत्यपि केचित्।

एवञ्च तस्य धातुनोक्तत्वात् तद्गतं वर्तमानत्वादि लडादिद्योत्यम्, द्योतकत्वञ्च शक्त्याधायकत्वम्। तच्च नानार्थेषु शक्तस्य स्वसन्निधानेन शक्तिपरिच्छेदकत्वम्। ननु स वाच्य एवास्तु, अनेकधातूनां तत्र शक्तिकल्पने गौरवापत्तेः, एकस्य लट एव शक्तिकल्पनौचित्याच्च।

किञ्च, 'वर्त्तमाने लट्' (३।२।१२३) इति विशिष्य विधानेऽपि तत्राशक्तौ कर्त्ताऽपि वाच्यो न स्यात्, स्याच्च द्योत्य एव, अविशेषात्।

किञ्च, वर्तमानत्वविशिष्टक्रियाबोधं प्रति लट्समभिव्याहारस्य कारणत्वं वाच्यम्। तथा च तुल्यत्वाल्लटो वाचकत्वमेवोच्यताम्। न च वाच्यत्वे विशेषेण सामान्यस्य तक्रकौण्डिन्यवद् बाधे कर्तुर्वाच्यतैव न स्यादिति वाच्यम्, 'लः कर्मणि' (३।४।६९)।

अत्रेदं बोध्यम्—तक्रन्यायेन बाध्यबाधकत्वेन सम्मतशास्त्रजन्यबोधीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तत्र बाधकशास्त्रीयव्याप्यविषयताश्रयातिरिक्तत्वेन बाध्यशास्त्रीयविषयताश्रये सङ्कोचः। एवञ्च—एककार्यविनियोगोद्देश्येन धर्मावच्छिन्नातिरिक्तत्वेन सङ्कोच इति न्यायस्वरूपम्। अत्र कौण्डिन्यत्वरूप व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन ब्राह्मणत्वरूपव्यापकधर्मावच्छिन्ने संकोचः। एवञ्च तक्रदानतः पूर्वं परं वा कौण्डिन्योद्देशकं न दधिदानमित्यस्य निरवकाशत्वादिति चेत्, न; माङि लुङ् (३।३।१७५) 'लट् स्मे' (३।२।११८) इत्यादौ चारितार्थ्यात्, एकधातुप्रकृतिकानेकलडादेशानां तत्र शक्तिकल्पने गौरवाच्च। तस्माद् द्योतकत्वमेव।

तत्र वर्तमानत्वं प्रारब्धापरिसमाप्तत्वम्, भूतभविष्यद्भिन्नत्वम्; वा। भूतत्वं 'विद्यमानध्वंसप्रतियोगित्वम्' भविष्यत्वञ्च 'वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिकत्वम्। प्रागभावानङ्गीकारे तु शब्दप्रयोगाधिकरणकालध्वंसाधिकरणसमयोत्पत्तिकत्वं तत्। तस्य च व्यापारसमुदायरूपक्रियायामन्वयः। अवयवव्यापारेष्वेवान्वय इति तु न युक्तम्, तथा सत्यवयवानां त्रिक्षणावस्थायित्वेन तत्र तस्यासम्भवेन पचतीति प्रयोगस्य विषयलाभ एव न स्यात्। 'पञ्चकृत्वः पचति' इत्यत्राप्यतिशयतृप्त्यादिफलेनैकीकृतावृत्तिगणितपाकसमुदाये वर्त्तमानत्वादीनामन्वयः।

क्वचित्तु 'प्रकृतः कटं देवदत्तः' इत्यादौ वाक्ये समुदायरूपारोपेण, अवयवगतातीतत्वस्यैव समुदाये आरोपेण वा भूतकालप्रयोग इति 'निष्ठा' (३।२।१०२) इति सूत्रे भाष्ये।

न चात्मास्ति, पर्वतास्तिष्ठन्ति, स्थास्यन्ति, अस्थुः; इत्यादिव्यवहारानुपपत्तिः; क्रियाया आरब्धत्वाभावेन प्रागुक्तवर्तमानत्वाभावाद् भूतत्वभविष्यत्वयोरभावात्; चेति वाच्यम्, तत्तत्कालिकानां राज्ञां क्रिया आदाय तद्विशिष्टात्मसत्तादेरुक्तवर्तमानत्वादिसम्भवात्। एवम् 'एको ह वै नारायण आसीत्, इत्याद्युपपद्यते। स्पष्टञ्चेदम् 'वर्त्तमाने लट्' (३।२।१२३) इत्यत्र भाष्ये।

एवं भूतानद्यतनपरोक्षक्रियार्थकाल्लिट्। 'पपाचेत्यादिवाक्यजबोधे भूतत्वसन्देहानुदयाद् भूतत्वादेरिवानद्यतनत्वादेरपि बोधविषयत्वम्।

परोक्षत्वञ्च वक्तृसाक्षात्कारतज्जन्यासंस्कारान्यतराविषयत्वम्। नन्वत्र 'परोक्षे' इति विशेषणमसङ्गतम्, साध्यत्वेनाभिधीयमानः, गुणभूतावयवः, क्रमिकव्यापाराणामेकफलजनकफलजनकत्वरूपयैकबुद्ध्या विषयीकृतः समूहः क्रिया।

तत्र यद्यप्यवयवाः प्रत्यक्षाः एव, अत एव 'पश्य मृगो धावति' इत्यादौ क्रियाया दर्शनकर्मता। तथाप्यवयवानां मेलनाभावेन समुदायस्य सर्वस्यापि परोक्षत्वेनाव्यावर्तकत्वात्। तदुक्तं भाष्ये—क्रियानामियमत्यन्तापरिदृष्टा, न शक्या पिण्डीभूता निदर्शयितुम्' इति सा (सर्वाप्य ?) नुमानगम्येति चेत्, नः तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यस्येह विवक्षितत्वात्। तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिट्, यथा—पपाचेति।

एवं स्वव्यापारस्य वर्त्तमानस्य व्यासङ्गादिना स्वयमप्रतिसन्धाने तत्तत्कार्येणानुमितौ सख्याद्युक्त्या वा ज्ञाने भवत्येव लिट्, यथा—बहु जगद पुरस्तात् तस्य मत्ता किलाहम्, इति, 'व्यातेने किरणावलीमुदयनः' 'इत्यपि 'निष्ठा' (३।३।१०२) इति सूत्रभाष्योक्तरीत्या भूतत्वानद्यतनत्वपरोक्षत्वानामारोपेणोपपन्नम्।

आरोपफलं तु ग्रन्थेऽति सुकरत्वशीघ्रनिष्पाद्यत्वादिप्रत्यापन्नमेव। तत्फलं तु तत्कालिकाध्येतॄणां स्वशिष्याणामर्थप्रविवेकादिफलकममुं ग्रन्थं ज्ञातुमुत्सुकानामाह्लादनमेव। परोक्षत्वारोपोऽथैतत्फलक एव।

एवं सूक्ष्मकालेन करिष्यामि यत्नकरणकाले स्वेनापि साक्षात्कर्तुमशक्यमित्येवं बोधनादनायासेन ग्रन्थकरणमपि व्यङ्ग्यम्। सूर्योपमाप्येतत्पोषिकैव। इतरग्रन्थेभ्योऽस्मिन् ग्रन्थे, तत्कर्तृभ्यश्च स्वस्मिन् व्यतिरेकोऽपि व्यङ्ग्यः। भविष्यतः प्रयोगकाले वास्तवमेव परोक्षत्वमिति न तदंशे आरोपापेक्षेत्यपि वदन्ति।

केचित्तु क्रियायामेव पारोक्ष्यम्, न च सर्वापि सा परोक्षेवेत्यव्यावर्तकं तत्, अवयवशः प्रत्यक्षत्वात्। न (च) प्रत्येकं न क्रियात्वम्, तावतापि धात्वर्थत्वाक्षतेः, क्रियात्वस्यावयवावयविसाधारणत्वाच्च।

किञ्च, धातोरित्यस्य धात्वर्थे लक्षणायां स्ववाच्यत्वं सम्बन्धः, साधनलक्षणायां स्ववाच्यसाधनत्वं सम्बन्ध इति गौरवम्। अवयवाश्रयत्वादेव च देवदत्तस्य कर्तृत्वादि सङ्गच्छत इत्याहुः।

अनद्यतनत्वं चातीतररात्रेः पश्चार्धेनागमिन्याः पूर्वार्धेन च कालोऽद्यतनः, तद्भिन्नत्वम्। एवमनद्यतने भविष्यति लुट्, भविष्यत्सामान्ये लृट्; इत्यादि तत्तदनुशासनबलाद् व्यवहाराच्च बोध्यम्।

———

# अथ विध्यादौ विहितलिङर्थे किञ्चिदुच्यते

तत्र विधिः=प्रेरणम्, यथा निकृष्टस्य भृत्यादेः। निमन्त्रणम्=नियोगकरणम्, आवश्यके श्राद्धभोजनादौ प्रवर्तनम्। आमन्त्रणम्=कामचारानुज्ञा। अधीष्टः=सत्कारपूर्वको व्यापारः। तच्चतुष्टयानुस्यूतप्रवर्तनासामान्यं विध्यर्थः। विध्यादिसूत्रे चतुर्णां पृथगुपादानं स्पष्टार्थम्। प्रवर्तनात्वं शक्यतावच्छेदकम्। तदतिरिक्तांशस्य प्रमाणान्तरलभ्यत्वान्न शक्यत्वम्।

न च 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (३।३।१६३) इति सूत्रे प्रैषादिग्रहणं व्यर्थम्, निमन्त्रणादौ कृत्याभावार्थं तस्यावश्यकत्वात्। लोड्विधानं प्राप्तकालार्थम्, प्रवर्तना च प्रकृत्यनुकूलो व्यापारो वक्त्रभिप्रायः। स चेच्छाविशेषरूपः, इच्छागतवैजात्यस्य शक्यतावच्छेदकत्वेन लाघवात्।

अत एव प्रार्थनस्य पृथग् ग्रहणम्। तत्र क्वचिदिच्छासत्त्वेऽपि तस्यानियमेनाप्रवर्तकतयाऽत्र वैजात्यनिवेशस्यावश्यकत्वात्। इच्छा च लोके पुरुषनिष्ठा, वेदे त्वीश्वरनिष्ठैव, 'नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति' इति भाष्यात्। तत्र हीश्वराज्ञा वेदः। प्रवर्तकत्वं च स्वातन्त्र्ये सति तादृशार्थबोधकलिङाद्युच्चारयितृत्वादिकमेव।

यत्तु, इष्टसाधनत्वमेव स व्यापारः, इष्टसाधनताज्ञानस्य प्रवृत्तिसामान्ये हेतुत्वावधारणेन तस्यैव वाच्यत्वौचित्यात्। इष्टं च क्वचित् साक्षात्क्तु रेव, क्वचित् परम्परया। अत एव च 'आचार्यप्रेरितोऽहं गामानयामि' इत्यादावाचार्यादेः प्रवर्तकत्वव्यवहारः सङ्गच्छते। भवत्प्रेरणयाऽहमध्यापयामि, न किञ्चिन्ममेष्टमिति व्यवहारस्तु न मे साक्षात् किञ्चिदिष्टमित्येवम्परः।

प्रवर्त्तकत्वञ्च प्रवृत्तिजनकेष्टसाधनत्वबोधकलिङाद्युच्चारयितृत्वादिकमेव। न च राजप्रेरितपदातेस्तादृशलिङाद्युच्चारयितृत्वेन प्रवर्तकत्वापत्तिः, न चेष्टापत्तिः, 'पदातिप्रेरितोऽहं नेदं कुर्वे, किन्तु राजप्रेरितः' इति व्यवहारानापत्तेः, इति वाच्यम्, स्वातन्त्र्ये सतीति विशेषणात्। पिशुनप्रेरितराज्ञ्यपि स्वातन्त्र्यमस्त्येव। बलात्कारेण गुर्वादिप्रेरितबालाद्यध्यापनेऽपि तदभावप्रयुक्तगुर्वादिक्रोधजन्यताडनाभाव एवेष्टः।

फा० २०

यद्यपि 'स्वरितञितः' (१।३।७२) इत्यादौ क्रियाफलशब्देन प्रत्यासत्त्या धात्वर्थभूतमेव फलं गृह्यते, तथापीह तथाग्रहणे न किञ्चिन्मानम्। न चेष्टसाधनताज्ञानं न प्रवर्त्तकम्, अनिष्टसाधने उदासीने च 'कष्टं कर्म' इति न्यायेन द्वेषादप्रवृत्तेरिति वाच्यम्, आन्तरालिकश्रमे द्वेषाभावदशायां तदज्ञानदशायां वा प्रवृत्त्यापत्तेः न च चिकीर्षायां सत्यामिष्टापत्तिरिति वाच्यम्, इष्टसाधनत्वज्ञानं विना तस्या एवाभावात्।

एवञ्चेष्टसाधनत्वमेव लिङ्शक्यम्। तच्च स्वर्गादिसाधनत्वेनैव, तेन रूपेण ज्ञानस्यैव प्रवर्तकत्वात्; न त्विष्टत्वेन, तस्य स्वरूपसत एव हेतुत्वेन तज्ज्ञानानपेक्षणात्, बहुवित्तायाससाध्ये आमुष्मिके च विशिष्य तज्ज्ञानं विना प्रवृत्त्यभावाच्च।

तत्र नानार्थत्वपरिहाराय तदादाविव शक्यतावच्छेदकानामनुगमिकेच्छेति बोध्यम्। यथा बुद्धिविषयत्वरूपेणोपस्थितघटत्वपटत्वादिशःलिषु बुद्धिविषयतावच्छेदकवति तदादिपद शक्तमित्येव तदादेः शक्तिग्रहः बुद्धिविषयत्वमुपस्थितावुपलक्षणतयानुगमकमात्रम्, न तु तदंशे शक्तिः। एवमिहापि लिङादिरिच्छाविषयतावच्छेदकस्वर्गत्वादिवत्साधनत्वशक्ति इत्येव शक्तिग्रहः।

न चैवं तावता तदादौ बुद्धिः, ग्रहेच्छा वा प्रविष्टा। पदार्थोपस्थितिरपि तदादौ प्रकरणादिमहिम्ना बुद्धिविषयतावच्छेदकघटत्वादिनेवेहापि समभिव्याहृतस्वर्गपदमहिम्ना स्वर्गादिसाधनमित्येव, न तु बुद्धीच्छयोः शाब्दबोधे मानम्।

एवञ्च विशिष्येष्टतावच्छेदकस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः।

एवञ्च इच्छाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे विधेः शक्तिरिति फलितम्।

न चैतस्यापि स्वर्गकामादिपदाल्लाभेन न तत्र शक्तिः, कामान्तपदात् स्वर्गाद्युपस्थितावपि साधनत्वबोधकाभावात्, विश्वजिदादौ तत्पदसमभिव्याहारस्याप्यभावाच्च। सामान्यत इष्टसाधनत्वमात्रे ज्ञातेऽपि पश्चाद्विशेषजिज्ञासायां तत्तत्पदकल्पनेति त्वन्यदेतत्।

बलवदनिष्टानुबन्धित्वज्ञानं तु न प्रवर्तकम्, बह्वायाससाध्ये प्रवृत्त्यनापत्तेः। तत्र बहुतरदुःखस्यापि जायमायत्वात् "अल्पदुःखस्यापि कुतश्चिद् बलवत्त्वेनानुगतबलवत्त्वस्य दुर्वचत्वाच्च। न चैवं मधुविषसम्पृक्तान्नभोजनादौ प्रवृत्त्यापत्तिः, तत्तद्विषयकबलवद्द्वेषस्य स्वातन्त्र्येण प्रतिबन्धकत्वेनादोषात्। अत एवान्तरालिकश्रमे बलवद्द्वेषवान् ज्योतिष्टोमादौ न प्रवर्तते, अन्यस्तु प्रवर्तत एव।

एतेन कृतिसाध्यत्वज्ञानं प्रवर्तकमित्यपास्तम्। कृत्यसाध्ये चन्द्रमण्डलादिग्रहणे प्रवृत्त्यभावश्च। तत इष्टाभावेन वृथाश्रमजनकतया द्वेषात्। किञ्चाशक्तस्यापि यत्किञ्चित्कृतिसाध्ये प्रवृत्त्यापत्त्या मदंशविशिष्टं प्रवर्तकं वाच्यम्।

एवञ्च वेदेन तथाबोधयितुमशक्यत्वान्न तच्छक्यम् । यागो मत्कृतिसाध्यः, मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात्; इत्याद्यनुमानरूपलौकिकप्रमाणेनापि तद्ग्रहसम्भवेनान्यलभ्यत्वाच्च । यागो मत्कृतिसाध्यो भवत्विति चिकीर्षा तु लोकतस्तदवगमेनैव सिद्धा ।

अथेष्टसाधनत्वस्य विध्यर्थत्वे 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ तृतीया न स्यात्, करणानभिधान एव तद्विधानात् । न च यज्यर्थगतसाधनत्वेऽभिहितेऽपि तद्विशेषज्योतिष्टोमादिप्रातिपदिकार्थगतस्यानभिधानेन तृतीया सिद्धिः, ज्योतिष्टोमयज्यर्थयोरभेदात् । अतएव 'देवदत्तः पचति' इत्यादौ देवदत्तपदादपि न तृतीया । 'अनभिहिते' इत्यस्यानभिहितसङ्ख्याक इत्यर्थं इति वादिभिरपि कृत्साधारणाय करणतत्सङ्ख्यान्यतराभिधाने इत्यर्थोऽवश्यं वाच्यः । अन्यथा पचनीयस्याल्पेत्यस्याप्यापत्तेरिति चेत्, न; सव्यापारनिर्व्यापारसाधारणसाधनत्वाभिधानेऽपि करणत्वशक्तेः, तदाश्रयस्य चानभिधानेनादोषात् ।

नन्वेवमपि स्वर्गत्वविशिष्टसाधनत्वं ज्योतिष्टोमे बोधनीयम्; न च तत् सम्भवति, स्वर्गत्वादेर्गङ्गास्नानवाजपेयादिजन्यस्वर्गादिसाधारण्येन ज्योतिष्टोमादिजन्यतानवच्छेदकतया तत्र स्वर्गत्वादिविशिष्टसाधनत्वबाधात् , न हि जन्यानवच्छेदकधर्मो जनकत्वरूपके विशेषणं व्यभिचाराच्चेति चेत्, न; विजातीयतत्तत्साधनत्वस्यैव विधिना बोधाद् न दोषः । वैजात्यं च विधेस्तथाशक्तिस्वीकारादुपस्थितम् । एतदर्थमेव विधेस्तत्तत्साधनत्वे शक्तिरित्युक्तम् ।

एवञ्च कार्यतावच्छेदकधर्मवत्त्वरूपकार्यत्वस्यावच्छेदकाग्रहे दुर्ग्रहत्वादेव वैजात्यकल्पना, तद्विशिष्टे विधेः शक्तिश्चेति बोध्यम् ।

यदा, च स्वर्गत्वमेव कार्यतावच्छेदकम्; अतिप्रसक्तस्याप्यवच्छेदकत्वे दोषाभावात् । ननु तथा सति स्वर्गत्वावच्छिन्नस्यापि अग्निहोत्रज्योतिष्टोमरूपकारणभावेनानुत्पत्त्यापत्तिः, तथाप्युत्पत्तौ च घटादौ रासभवद् व्यभिचारादग्निहोत्रादेरकारणत्वप्रसङ्गः, एवं गुणसमवायिकारणतावच्छेदकत्वस्य द्रव्यत्वेनाङ्गीकारे सत्तायामेव तत्स्वीकारे च गुणादावपि रूपाद्यावत्तिरिति नातिप्रसक्तमवच्छेदकमिति चेत्, न; अग्निहोत्रादिजन्यापूर्वविशिष्टसमवायसम्बन्धेन स्वर्गत्वस्य तत्तद्विधावच्छेदकत्वान्न दोषः ।

एवं तृणादेरपि तृणत्वावच्छिन्नसंयोगसम्बन्धेन वह्नित्वावच्छिन्नं प्रति तृणत्वेन हेतुतेति न तत्रापि वैजात्यकल्पना । अत एव 'व्रीहिभिर्यजेत' इत्यादौ परस्परव्यतिरेकेण प्रत्येकं फलजनकत्वेऽपि न दोषः, व्रीहिभिर्यष्टव्य' इति सङ्कल्पापूर्वावच्छिन्नसमवायसम्बन्धस्यैव व्रीहिकार्यतावच्छेदकत्वेनादोषात् । सङ्कल्पापूर्वे च फलापूर्वोत्पत्तौ नष्टमिति प्रयोगान्तरे यवादीनामुपादानं नानुपपन्नम् । न चैवं रासभस्यापि घटहेतुत्वापत्तिः, यवादेः श्रुत्या तृणादेररणिमण्यभाववति स्तोमे तृणसत्त्वे वह्निसत्त्वे तदभावेऽनुत्पत्तिरित्यन्वयव्यतिरेकसहकृताध्यक्षात् तत्सिद्धावपि रासभस्य हेतुत्वे मानाभावात् । किन्त्ववश्यकल्प्यदण्डादिभिरन्यथासिद्धिरेव ।

एवं गुणादौ रूपापत्तिरपि न; तत्तद्रूपे तत्तद्द्रव्यस्य समवायिकारणताया आवश्यकत्वेन विशेषसामाग्र्यभावादेव तदभावोपपत्तेः।

एतेन विधिलभ्यार्थविचारकाले वैजात्यस्वीकारे ज्योतिष्टोमाग्निहोत्रयोः फलसाम्यापत्तौ अल्पवित्तव्ययायाससाध्याग्निहोत्रेणैव सिद्धौ श्रमाद्याधिक्येन द्वेषादप्रवृत्तौ ज्योतिष्टोमाश्वमेधादिविधीनामननुष्ठानलक्षणाप्रामाण्यापत्तिरिति मीमांसकोक्तमपास्तम्। यस्यैव लौकिकप्रतिष्ठादिरूपफलेच्छा, तस्यैव प्रवृत्तेः सम्भवाच्च।

अत एव सकलशास्त्रविदां युधिष्ठिरादीनां स्वल्पफलकराज्यार्थं गोत्रजब्राह्मणादिहननार्थं प्रवृत्तिः। अत एवाधुनिकानां कर्मासंगतत्वं जानतामपि बहुवित्तव्ययसाध्येषु अग्निहोत्राद्यनुष्ठानेषु लौकिकप्रतिष्ठार्थं प्रवृत्तिः सङ्गच्छते।

किञ्च, 'सर्वेभ्यः कामेभ्यो ह दर्शपूर्णमासौ' इत्युक्तेस्तस्य नित्यतया काम्यप्रयोगेणैव प्रसङ्गान्नित्यकर्मसिद्धिसम्भवेन प्रयुक्तिलाघवलोभात् पुत्रेष्ट्यादौ प्रवृत्त्यनापत्तौ तवापि पुत्रेष्ट्यादीनामानर्थक्यं दुर्वारम्। न च कृताधानस्य पुत्रलोलुपस्य दर्शपौर्णमासात् प्रागपि पुत्रेष्ट्याद्यनुष्ठानसम्मतेनानर्थक्यपरिहारः।

एवमपि मारवधूदर्शपौर्णमासानां काम्येष्टिप्रवृत्तिविलोपो दुर्वारः स्यात्; न च समानफलानामपि कर्मणां शक्ताशक्तभेदेन व्यवस्था। अत एव—

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः॥

इति भारतं च सङ्गच्छत इति चेत्, तुल्ये ममापि। अत एव 'वित्तशाठ्यं न कारयेत्' इति तत्तद्व्रतप्रकरणे पठ्यत इत्यलम्।

ननु 'न कलञ्जं भक्षयेत्' इति निषेधवाक्यार्थानुपपत्तिः, कलञ्जभक्षणादेस्तृप्त्यादिरूपेष्टजनकत्वेन तदभावस्य बोधयितुमशक्यत्वादिति चेत्, न, ईदृशे विषयेऽनिष्टसाधनत्वस्य लिङर्थत्वात् तत्रैव नञः, तात्पर्यग्राहक इत्यदोषः।

यद्वा, नञ्समभिव्याहारे प्रत्यवायाभावरूपेष्टसाधनत्वं विध्यर्थः, तदभावश्च नञा बोध्यते, साधनत्वञ्चात्र तत्सत्त्वे नियमतः प्रत्यवायाभावः, तदभावे नियमतः प्रत्यवाय इत्यन्वयव्यतिरेकवत्त्वम्। एवञ्चार्थात् तद्भक्षणादौ प्रत्यवायः सिध्यतीति न दोषः। 'ज्वरितो न भुञ्जीत' इत्यादौ तु 'दुःखवृद्ध्यभावरूपेष्टसाधनत्वं विध्यर्थ इत्याद्यूह्यम्।

न च नित्यनैमित्तिकयोः फलाभावेन तत्रेष्टसाधनत्वमर्थं इति वक्तुमशक्यम्, प्रत्यवायपरीहार-रूपफलस्य तत्रापि सत्त्वात्। तादृशफलेष्टसाधनत्वज्ञानादेव च तत्र प्रवृत्तिः। विधिबलेन तदकरणे प्राप्तस्य प्रत्यवायस्य तत्करणे परिहारावश्यम्भावात्। न च वेदबोधितत्वान्निष्फल एव प्रवृत्तिरिति कल्प्यम्, वेदसहस्रैरपि बोधिते निष्फलत्वज्ञानदशायामप्रवृत्तेः।

न च—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥ (भगवद्गीता १७।११)

इति भगवद्वचनविरोधः,

यज्ञो दानं तपः[1] कर्म पावनानि मनीषिणाम्।
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च॥
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्। (भगवद्गीता १८।५६)

इत्यष्टादशे भगवतैव पावनत्वोक्तेः। तस्मादनुद्दिष्टोऽपि प्रत्यवायपरिहारः फलमिति फलं त्यक्त्वापि क्रियमाणस्य पावनत्वमिति तदाशयः।

सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपा... यान्ति ब्रह्मलोकं सनातनम्।

इति क्वचिन्नित्येऽपि फलश्रवणाच्च।

नन्विदं स्तावकस्तुतिश्च प्ररोचनार्था, प्ररोचना च पुरुषप्रवृत्त्यर्थेति चेत्, न; सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादेरपि तथात्वापत्तेः।

चतुर्थी नु 'ऊर्जो वरुध्यै' इत्याद्यर्थवादे चतुर्थीवद् नार्थसाधिका, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिभिः फलाकाङ्क्षानिवृत्तेश्च।

---

१—पतश्चैव इति भगवद्गीतापाठः।

किञ्चार्थवादाप्रामाण्यं जानतस्ततः प्रवृत्तेरप्यनुपपत्तिः, 'बहुदुग्धेयं गौः' इति वाक्याप्रामाण्यं जानतस्तद्वाक्यादिव । न च स्वर्गाद्यर्थकतायामप्रामाण्येऽपि प्राशस्त्यबोधकत्वद्वारा स्तावकत्वमित्यभ्युपगतेऽर्थे प्रामाण्यमिति चेत्, न; तत्फलजनकत्वातिरिक्तप्राशस्त्यस्य क्वाप्यकल्पनात् । धर्मान्तरेण प्राशस्त्यज्ञानस्य प्रवर्त्तकत्वापायाच्च । तस्मात् स्वार्थं एवैषां प्रामाण्यम् ।

एवञ्च 'सन्ध्यामुपासीत' इत्यादौ विधित इष्टावगमेऽपि तस्यावान्तररूपेण बोधनद्वारा शीघ्रोत्पत्तिज्ञापनद्वारा वा प्रवृत्तिविशेषार्थमर्थवाद इति । अत एव सर्वशक्त्यधिकरणे 'काम्यं यथा फलायोपदिष्टं तथा नित्यमपि' इति भट्टैरुक्तम् । तस्मादिष्टसाधनत्वं विध्यर्थ इत्याहुः । तत्, न; एवं हि अन्येष्टसाधनेऽन्यस्य प्रवृत्त्यापत्त्या मदिष्टसाधनत्वज्ञानं प्रवर्तकं वाच्यम् । तथा च कृतिसाध्यत्ववदस्यापि शक्यताया वक्तुमशक्यत्वम् ।

किञ्चैवम् 'पृच्छत मां भवानित्यर्थे णिच् कस्मान्न भवति' इति 'हेतुमति च' (३।१।२६ इति सूत्रस्थभाष्यशङ्कायाः' द्रव्यमात्रविषयप्रेरणायां लोट्, सक्रियप्रेरणायां णिच्' इत्यादिसमाधानस्यासङ्गत्यापत्तिः । न हि णिचेष्टसाधनत्वं बोध्यत इति कस्यापि सम्मतम् । तस्मात् प्रागुक्तप्रेरणैव विध्यर्थः ।

एवञ्चाप्तप्रवर्तनया तत्राज्ञातज्ञाप्यत्वमिव श्रेयः साधनत्वमप्याक्षिप्यत इति प्रवर्त्तकेष्टसाधनत्वज्ञानोपपत्तिः । क्वचित् तु स्वर्गकाममादिसमभिव्याहारादादितो मानसमपि तज्ज्ञानमित्यन्यदेतत् ।

सा च प्रवर्तना लिङ्द्योत्या वाच्या वा ? तत्राद्ये उपपत्तिः, तस्याः प्रत्ययार्थत्वे कर्त्रादीनामर्थानां लकारान्तरे सावकाशानां विध्यादयो वाचकाः स्युः, पुरुषव्यवस्था च न स्यात् । द्वितीये त्वियमुपपत्तिः, विरोधाभावात् 'लः कर्मणि' (३।४।६९) इत्यत्र सर्वलकारसङ्ग्राहकबहुवचननिर्देशाच्च न कर्त्राद्यर्थानामेतैर्बाधः सङ्ख्यायाः सङ्ख्येयापेक्षितत्वेन तेषां वाचकत्वावश्यकत्वात् (च) लडादौ वर्तमानत्वपरोक्षत्वादीनां समावेशेन 'लः कर्मणि' (३।४।६९) इत्यस्य निरवकाशत्वाच्च ।

न च 'माङि लुङ्' (३।३।१७५) इत्यादिभिः कालसामान्यविहितेषु तत्सावकाशम्, तत्रापि विशेष्यासत्त्वभूतभावनायाः कालाकाङ्क्षितत्वेन कालस्य वाच्यत्वाङ्गीकारात् । अत एव तस्य सर्वलकारापवादत्वं सङ्गच्छते ।

न च निमन्त्रयेयं भवन्तमिति न स्यात्, निमन्त्रणाया उक्तत्वादिति वाच्यम्; प्रयोजनकनिष्ठयोर्निमन्त्रणयोरन्ययोः प्रत्यार्थत्वस्वीकारात् । तत्र तत्र द्योतकतापक्षो ज्यायान्, 'पच' इत्यादौ प्रत्ययं विनाऽपि प्रवर्तनाप्रतीतेः, पञ्चभिर्हलैः कृषतीत्यादौ प्रवर्तनाया धात्वर्थत्वस्य दृष्टत्वाच्च । एवञ्चात्र प्रयोजक-

व्यापारोऽपि धात्वर्थः, तस्यापि पाकाद्यनुकूलत्वात् । तत्र फलानुकूलत्वाद् तदुपस्थितव्यापाराणां मध्ये प्रयोजकव्यापारस्य विषयितया विशेषणत्वेनान्वयः, इतरेषां तु विषयतया विशेष्यत्वेन ।

एवं द्विप्रकारकान्वये लिङादयस्तात्पर्यग्राहकाः। तथा चैकाश्रयिका प्रवर्तनाविषयीभूता पाकानुकूला क्रियेत्यादिप्रकारेण वदेदित्यादौ बोधः ।

न चैवं प्रवर्तनाश्रयस्यापि धात्वर्थव्यापाराश्रयत्वेन कर्तृत्वात् तत्र कर्तरि लकारः स्यादिति वाच्यम्, लिङाद्युत्पत्तेः पूर्वं प्रवर्तनाया अप्रतिपादनात् तदाश्रयस्य कर्तृत्वाभावेन तमादाय 'लः कर्मणि' इत्यस्याप्रवृत्तेः । लिङ्क्षु सूत्रद्वयाभ्यामेकवाक्यतापन्नाभ्यां विधीयत इत्यदोष इति बहवः ।

अन्ये तु 'पाचयति' इत्यादौ प्रवर्तनाया विशेष्यत्वस्य क्लृप्तत्वेनात्रापि तथैवास्तु । एवञ्चैकाश्रयपाकानुकूलक्रियाविषया प्रवर्त्तनेति बोधः । न चैतस्याः प्रत्ययवाच्यत्वपक्षे 'क्रिया प्रधानमाख्यातम्' इति वचनबोधितधात्वर्थविशेष्यताया एव बोधननादोषात् ।

न च णिच्सनादौ प्रकृत्यर्थ एव विशेष्यः, औत्सर्गिकप्रत्ययार्थप्राधान्यत्यागे मानाभावात्, अनुभवविरुद्धत्वाच्च 'पाचयिता' इत्यादौ णिजर्थादीनां प्राधान्यस्यावश्यकत्वाच्चेत्याहुः ।

तत्र कारकविशिष्टधात्वर्थस्य प्रवर्तनायाम्, तादृशधात्वर्थे प्रवर्तनाया वान्वयः, कारकान्वयं विना धात्वर्थस्य निरूपयितुमशक्यत्वात् ।

एवञ्च प्रवर्तनाक्षिप्तमज्ञातज्ञाप्यत्वं श्रेयः साधनत्वञ्च विशिष्ट एव । कारकविशिष्टक्रियाया एव प्रवर्तनाविषयत्वात् । धात्वर्थस्य प्राप्तत्वे तु तात्पर्यतो गुणांशे पर्यवस्यति । यथा दध्ना जुहोति' इति । लिङादौ प्रवर्तना च वस्तुतो वर्तमानकाल एव भासते, शब्दशक्तिस्वभावाद्, वर्तमानकालस्यान्तरङ्गत्वाच्च । धात्वर्थस्तु भविष्यत्काल एव, शब्दशक्तिस्वभावात् ।

एतेन पुराणा प्रयोज्यपाकवर्तमानतादशायां 'पचेत्' इति प्रयोगापत्तिरिति निरस्तम् । विधिलिङ्युक्तमस्तु न, स्वप्रवृत्तौ स्वेच्छायाः स्वरूपसत्या एव कारणत्वेन तज्ज्ञानानुपयोगात् । इदमेवाभिप्रेत्य 'उत्तमपुरुषो विधिशक्तिप्रतिबन्धकः' इति मीमांसकाः ।

'न कलञ्जं भक्षयेत्' इत्यादौ नञ्समभिव्याहारे तु निवृत्तिर्लिङर्थ इति सर्वेष्टसिद्धिः ।

—— :०: —

लोकानामधिकं प्रामाण्यं लिङ्गविषयेऽभ्युपगतम् । अन्यत्राप्यनेकत्र शब्दानुशासनसिद्धान्तैरनिष्पत्तिदशायाम्--'सिद्धमेतत्, कथम् ? लोकात्' इति लोकानां साक्ष्यमभ्युद्धृतम् ।

अत एव शब्दानुशासनस्वरूपप्ररूपणप्रस्तावे भाष्ये आशङ्कितम्—शब्दानां तदर्थानां तेषां सम्बन्धानां च सिद्धत्वात् तद्व्युत्पादनपरं व्याकरणमिदं निष्प्रयोजनम्' सिद्धे शब्दार्थसम्बन्धे' इत्यनेन । अत्र सिद्धशब्दो नित्यपर्याय इत्यपि महताडम्बरेण तत्रैव भाष्ये समर्थितम् ।

—:०:—

# सहायकग्रन्था:


१ – अथर्ववेदः सायणभाष्यसहितः विश्वबन्धु शोधसंस्थानम्, होशियारपुरम्, सन् १९६४ ई० ।

२—अष्टाध्यायी—पाणिनिकृता (व्याकरण) चौखम्बा प्रकाशन, वाराणसी, अष्टम संस्करण १९७४ ।

३—आप्तमीमांसा – अष्टशती, अष्टसहस्रीटीकासंहिता भारतीय जैनदर्शन प्रकाशन संस्था, वाराणसी, १९१४ ।

४—ऋग्वेदः – सायणभाष्य सहितः वैदिक संशोधन मण्डल पुण्यपत्तनम् (पूना) सन् १९४१ ।

५—ऋग्वेदभाष्य भूमिका – हिन्दी व्याख्यानोपेता – चौखम्बा प्रकाशन, वाराणसी, तृतोय संस्करण १९६६ ।

६—एकादशोपनिषद्संग्रहः – मोतीलाल बनारसीदास, वाराणसी, षष्ठं संस्करणम्, १९६६ ।

७ काशिकावृत्तिः वामन जयादित्याभ्यां बिरचितान्यायसपदमञ्जरीसहिता, तारापब्लिकेशन, वाराणसी, प्रथम संस्करण, १९६७ ई० ।

८—काव्यप्रकाशः आचार्यमम्मटकृतः वामनीटीकासहितः, भण्डारकरप्राच्यविद्याशोधसंस्थानम्, पूना, सप्तमावृत्तिः, १९६५ ।

९—गदाधरी—तत्त्वचिन्तामणिदीपिका टीकाद्वयोपेता, चौखम्बा प्रकाशन, वाराणसी, १९१७ ई० ।

१०—चन्द्रालोकः—श्रीजयदेव कविविरचितः, चौखम्बा संस्कृत सीरीज, वाराणसी, १९६४ ई० ।

११—चार्वाकदर्शन की शास्त्रीय एक समीक्षा—डाँ० सर्वानन्द पाठक, चौखम्बा प्रकाशन, वाराणसी १९६५ ई० ।

१२—चरकसंहिता—अग्निवेशकृता चरकप्रतिसंस्कृताः, चौखम्बा प्रकाशन, वाराणसी १९७२ ई० ।

१३—चार्वाक दर्शन—आनन्दझाविरचितः, हिन्दीग्रन्थ अकादमी, उ० प्र०, प्रकाशन ।

१४—तर्कसंग्रहः -अन्नंभट्टकृतः अष्टटीका समन्वितः, चौखम्बा प्रकाशन, वाराणसो द्वितीय संस्करणम् १९७६ ।

१५—तत्त्वार्थवार्तिकम्—अक्लङ्कभट्ट कृतं भागद्वयात्मकम् भारतीय ज्ञानपीठ, काशी प्रथमावृत्तिः, १९४३ ।

१६—तत्त्वसंग्रहः—शान्तिरक्षितकृतः कमलशीलटीकोपेतः बौद्ध भारतीय प्रकाशन सन् १९६८ ।

१७—तत्त्वचिन्तामणिः—गंगेशोपाध्यायकृतः दीधित टीकोपेतः, चौखम्बा प्रकाशन, वाराणसी सन् १९१७

१८—तन्त्रवार्तिकम्—कुमारिलभट्टकृतम् चौखम्बा प्रकाशन, वाराणसी, सन् १९०३ ।

१९—ध्वन्यालोकः—आनन्दवर्धनाचार्य विरचितः लोचन संस्कृत टीका, जगन्नाथपाठक कृत हिन्दी टीकायाश्च । चौखम्बा प्रकाशन, वाराणसी, प्रथम संस्करण, १९६५ ।

२०—न्यायसूत्रम्—महर्षि गौतम प्रणीतम् वात्स्यायन भाष्योद्द्योतकरवार्तिकवाचस्पतितात्पर्य टीकोद्वयन परिशुद्धिरूपन्याय चतु० ग्रन्थिका समलङ्कृतम्। मिथिला विद्यापीठप्रधानेन प्रकाशितम् सन् १९६७ ।

२१—न्यायकुसुमाञ्जलिः—उदयनाचार्यकृतव्याख्याचतुष्टयोपेत;, चौखम्बा प्रकाशन, वाराणसी, द्वितीयावृत्ति सन् १९५७ ।

२२—न्यायमञ्जरी जयन्तभट्टकृता—चौखम्बा प्रकाशन, वाराणसी, १९३६ ।

२३—न्यायसूत्रम् महर्षि गौतम प्रणीतम् -विश्वनाथीयवृत्ति, भाष्यद्वयीपेतम् आनन्द आश्रम् मुद्रणालय, पूना, सन् १९२२ ।

२४ - न्यायसिद्धान्त मुक्तावली -- विश्वनाथ विरचित दिनकरीरामरुद्री संहिता, चौखम्बा प्रकाशन, वाराणसो, तृतीय सं०, १९७२ ।

२५—न्यायसिद्धान्तमुक्तावलो, किरणावली टीकोपेता । चौखम्बा प्रकाशन, वाराणसी द्वितोय संस्करण सन् १९७२ ।

२६ - न्यायविन्दुः धर्मकीर्तिविरचितः । चौखम्बा प्रकाशन, वाराणसी, १९५४ ।

२७ - न्यायकोशः—निर्णय सागर मुम्बई, १९२८ ।

२८—निरुक्तम् --महर्षि यास्कप्रणीतम् मेहर चन्द्र लक्ष्मणदास पुस्तकालय, दरियागंज, दिल्ली, प्रथम संस्करण, १९६३ ।

२९—प्रमाणसमुच्चयः --दिङ्नागकृतवृत्ति संहितः मैसूर विश्वविद्यालय प्रकाशनम्, मैसूर १९१५

३०—प्रमाणवार्तिकः धर्मकीर्ति विरचितः मनोरथनन्दि वृत्तियुतः बौद्धभारती, वाराणसी १६६८, ई०

३१—प्रशस्तपादभाष्यम्-श्री प्रशस्तपादाचार्य विरचितम्, न्याकन्दली टीकोपेतम्; अनुसन्धानसंस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी, सन् १६६३ ई० ।

३२—प्रमेय कमल मार्तण्डः—श्री प्रभाचन्द्राचार्य विरचितः बम्बई, १६१२ ।

३३—प्रकरण पञ्चिका, शालिकनाथ मिकृता, काशी हिन्दू विश्वविद्यालय, वाराणसी, १६६१ ई० ।

३४—परमलघुमञ्जूषा – नागेश भट्टकृता चौखम्बा संस्कृत सीरीज, वाराणसी, द्वितीय संस्करण, सन् १६७४ ई० ।

३५—परिभाषेन्दुशेखरः—नागेश भट्टकृतः भूतिभूषितः राजराजेश्वरी प्रेस, पुस्तकालय, दुर्गाघाट, वाराणसी, सन् १६६५ ई० ।

३६—प्रौढ़मनोरमा—भट्टोजिदीक्षितकृता शब्दरत्नसहिता, चौखम्बा प्रकाशन, वाराणसी, १६४० ।

३७—पाणिनीय शिक्षा– महर्षि पाणिनि शिष्य संकलिता, चौखम्बा प्रकाशन, वाराणसी, १६३३ ।

३८—पाणिनीय व्याकरणे प्रमाण समीक्षा—डॉ० रामप्रसाद त्रिपाठि, विरचितशोधग्रन्थः, अनुसन्धान संस्थानम् संस्कृत विश्वविद्यालयः प्रथमावृत्तिः, १६७२ ।

३६—मानमेयोदयः –नारायण भट्ट प्रणीतः षड्दर्शन प्रकाशन प्रतिष्ठानम् उदासीन संस्कृत महाविद्या लय, वाराणसी, १६७८ ।

४०—मीमांसा न्यायप्रकाशः श्रीमदापदेवकृतः सारविवेचनी व्याख्या सहितः, चौखम्बा प्रकाशन वाराणसी, द्वितीय संस्करण १६४७ ।

४१—मीमांसासूत्रम्—महर्षि जैमिनि प्रणीतम्. मण्डारकर रिसर्च, इन्स्टीच्यूट, पूना, १६३१ ई० ।

४२—महाभाष्यम्–महर्षि पतञ्जलि विरचितम्. प्रदीपोद्द्योतटीकाद्वयसहितम् भागत्रयात्मकम्-प्रकाशकः मोतीलाल बनारसीदास, वाराणसी, संस्करण, प्रथम सन् १६६७ ई० ।

४३—योगसूत्रम् महर्षि पतञ्जलिविरचितम्—व्यासभाष्यतत्त्ववैशारदी योगवार्तिक व्याख्या त्रयोपेतम्, भारतीय विद्याप्रकाशनम् वाराणसी, प्रथम संस्करण, १६७१ ।

४४—वेदान्तसूत्रम्—महर्षि व्यासविरचितम्—शाङ्करभाष्यसमन्वित्, चौखम्बा प्रकाशन, वाराणसी १६५२ ।

४५—वेदान्तपरिभाषा—धर्मराजाध्वरीन्द्र प्रणीता, ज्ञानसत्र प्रकाशनमन्दिरम् नर्मदापुरम्, प्रथम संस्करण, १६६७।

४६—बाल्मीकि रामायणम्—महर्षि वाल्मीकि कृतम् गीता प्रेस, गोरखपुर, प्रकाशन १६६०।

४७—वैशेषिक सूत्रम्—महर्षि कणाद विरचितम् शङ्करमित्र कृत उपस्कार टीका समन्वितम्, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, प्रथम संस्करण सन् १६६६।

४८—वैशेषिक सूत्रम्—प्रशस्तपाद भाष्यसहितम्, चौखम्बा प्रकाशन, वाराणसी।

४६—वैशेषिक सूत्रम्—उदयनाचार्यकृत किरणावली टीकोपेतम्, चौखम्बा प्रकाशन, बाराणसी १६१६।

५०—वैयाकरण भूषणसारः—कौण्डभट्टविरचितः प्रभादर्पण टीकाद्वयोपेत,, चौखम्बा, प्रकाशन, वाराणसी १६६६।

५१—वैयाकरण सिद्धान्तलघुमञ्जूषाः नागेशभट्ट विरचिता रत्नप्रभाटीका युता, चौखम्बा संस्कृत सीरीज, वाराणसी, द्वितीयसंस्करण, १६६३।

५२—वाक्यपदीयम्—श्रीमर्तृहरि विरचितम् (ब्रह्मकाण्डम्) स्वोपज्ञवृत्ति, अम्बाकर्त्री टीकाद्वयोपेतम्। प्रकाशकः—अनुसन्धानसंस्थान, संस्कृत विश्वविद्यालय, वाराणसी, द्वितीया वृत्ति, १६७६।

५३—वाक्यपदीयम् (पदकाण्डम्), पुण्यराजोयावृत्तिः, अम्बाकर्त्री, टीकाद्वय जुष्टम्, प्रकाशकः अनुसन्धानसंस्थान संस्कृतविश्वविद्यालय, वाराणसी।

५४—वाक्यपदीयम् (वाक्यकाण्डम्) जातिद्रव्य सम्बन्ध समुद्देश्यात्मकम्, हेलाराजो, अम्बाकर्त्री टीकाद्वयोपेतम्, अनुसन्धानसंस्थानम, वाराणसेय संस्कृतविश्वविद्यालय, वाराणसी, १६७६।

५५—वाक्यपदीयम्—मूलम्, पुष्पपत्तनविद्यापीठाधिकृतैः प्रकाशितम्, प्रथम संस्करण १६६५।

५६—व्याकरणदर्शनविन्दुः, श्रीरघुनाथ शर्मकृतः, प्रकाशकः, अनुसन्धानसंस्थानम्. संस्कृत विश्वविद्यालय, वाराणसी।

५७—रसगङ्गाधर : (पण्डितराज जगन्नाथकृतः) भागद्वयात्मकः मधुसूदनीटीकायुतः काशी हिन्दू विश्वविद्यालय, वाराणसी, प्रथम संस्करण सन् १६६६।

५८—रत्नकीर्तिनिवन्धावलो—तिब्बतियन संस्कृत वर्क सीरीज काशीप्रसाद जायसवाल इन्स्टीट्यूट, पटना, सन् १६५७।

५९—यजुर्वेदः —उव्वट महीधर भाष्य द्वयोपेतः, प्रकाशकः —मोतीलाल बनारसीदास, चौक, वाराणसी सन् १९७१ ।

६० —सर्वदर्शन संग्रहः —श्री माधवाचार्यकृतः हिन्दी टीकायुतः, चौखम्बा प्रकाशन, वाराणसी, प्रथम संस्करण १९६४ ।

६१—साहित्यदर्पण—विश्वनाथ कविराज कृतः प्रकाशक मोतीलाल वनारसीदास, वाराणसी, अष्टम संस्करण १९७५ ।

६२—सांख्यसूत्रम्—कपिलमुनिकृतम्, सांख्यप्रवचनभाष्य सहितम् भारतीयविद्या प्रकाशन, वाराणसी सन् १९६५ ।

६३—सांख्य कारिका—सांख्यतत्त्व कौमुदीयुता—चौखम्बा प्रकाशन, वाराणसी सन् १९७१ ।

६४—सारस्वती सुषमा—संस्कृत त्रैमासिकी पत्रिका, प्रकाशक, अनुसन्धानसंस्थान, संस्कृत विश्व-विद्यालय, वाराणसी--२ ।

६५—सप्तपदार्थी—महादेवकेशवकाले, गिरगांव, बम्बई, सन् १९१९ ।

६६—सिद्धान्त कौमुदी—भट्टोजि दीक्षित विरचिता, तत्त्वबोधिनी, टीकापेता, खेमराज श्रीकृष्णदास वेंकटेश्वर प्रेस, बम्बई ।

६७ स्फोट सिद्धिः —चौखम्बा प्रकाशन, प्रथम संस्करण १९३० ई० ।

६८—शतपथ ब्राह्मण-अच्युत ग्रन्थमाला कार्यालय, वाराणसी, सं० १९९४ ।

६९ श्रीमद्भागवतम्—गीता प्रेस, गोरखपुर प्रकाशन, द्वितीय संस्करण सं० २००८ ।

७०—शास्त्रदीपिका—पार्थसारथि मिश्र कृता, चौखम्बा प्रकाशन, वाराणसी, सन् १९६४ ।

७१—श्लोकवार्तिक—सं० शे० कृ० रामनाथ शास्त्री, मद्रपुरी विश्वविद्यालय, मद्रास, सन् १९४० ई० ।

७२—शक्तिवादः —हरिहर नाथी विवृत्ति युतः, चौखम्बा प्रकाशन, वाराणसी सन् १९२९ ई० ।

७३—शब्दशक्ति प्रकाशिका—कृष्णकान्ती रामभद्री टीका द्वयोपेता, चौखम्बा प्रकाशन, वाराणसी, द्वितीय संस्करण, सन् १९७३ ई० ।

———

॥ श्रीहरिः ॥



# श्रीगुरू महाराज के चरणारविन्दों में



प्रकाशक

## श्रीमान् कृष्ण लाल यादव एवं
## श्रीमती शिवरात्री देवी

लोको कालोनी, खगौल, पटना (बिहार)

का सादर नमन

मुद्रक—बाल भाई द्वारा जगमोहन प्रिन्टर्स, २८ सम्मेलन मार्ग, इलाहाबाद।